# बालनीतिकथाः

रचयिता
वैद्य. रामस्वरूपशास्त्री

सम्पादकः
नन्दनन्दनसनाढ्यः एम० ए०

बालसंस्कृतम् प्रकाशनम्
आगरा रोड, घाटकोपर, बम्बई-७७

मूल्यं ६३ न.

# कथानां क्रमः





द्वितीयं मुद्रणम् ] [ १ मई खिष्टाब्दाः १९६३

प्रकाशकः—

वैद्यः–रामस्वरूपशास्त्री

बालसंस्कृतं कार्यालयः, आगरा रोड, घाटकोपर, बम्बई-७७

# बालनीतिकथाः

## प्रथमो भागः

श्रियां नाथं नमस्कृत्य नत्वा च सुरभारतीम् ।
कथये शिष्यबोधाय बालनीतिकथाः प्रियाः ॥

### लुब्धो दाशः

पुरा धारानगर्यां कश्चिद् दाशः आसीत् । स एकां कुक्कुटीम् अपालयत् । परमा अद्भुता आसीत् सा कुक्कुटस्त्री । सा नित्यं सौवर्णम् अण्डम् अददात् । दाशस्तु तस्य सौवर्णस्य अण्डस्य विक्रयेण कुटुम्बम् अपुष्यत् । सुवर्णं लब्ध्वा तस्य तृष्णा अवर्धत । स अर्थस्य संग्रहं कर्तुं प्रवृत्तः । धनसञ्चये प्रसक्तः स दाशः एकदा अचिन्तयत्--

किन्न एकपदे सर्वं सुवर्णं कुक्कुटस्त्रियाः ।
कुक्षिं विदार्य संग्राह्यं किं स्वल्पेन शनैः शनैः ॥

इति विचिन्त्य स कुक्कुट्याः उदरं पाटयाञ्चकार । उत्पाटिताद् अपि कुक्कुट्याः उदरात् न स एकमपि अण्डम् अलभत । 'हा दुःखम् ! वृद्धिमिष्टवतो मूलं मे विनष्टम्', इति बहु

विलप्य लोभाविष्टः स आत्मानं शपन् विनष्टः। अत उच्यते—

मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम्।
लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम्॥



## धूर्तः शृगालः

एकः शृगालः आसीत्। स वनेऽवसत्। एकदा स जलं पातुं वापीम् अगच्छत्। स जलेऽपतत्। तस्मिन्नेव क्षणे कश्चित् छागः तत्रागच्छत्। स अपि पिपासितः आसीत्। स तम् अपृच्छत्—'अहो मित्र! अपि वर्तते मधुरं जलम्?' शृगालः अवदत्—'मधुरमिति किं कथयामि, केवलं पीयूषमेव'। वारं वारं पीत्वापि तृप्तो न भवामि। न कामये हातुं जलमिदम्।

छागः सरलहृदयः आसीत्। स दुर्जनस्य तस्य मधुराणि वचनानि श्रुत्वा जलं पातुं तां वापिकाम् अवातरत्। शृगालस्तु तस्य पृष्ठे पादं निधाय वाप्याः बहिः निरगच्छत्। छागस्तु तत्रैव जले मज्जनानि उन्मज्जनानि च पुनः पुनः अनुभूय दुःखेन प्राणान् अत्यजत्। अत उच्यते—

दुर्जनः प्रियवादी च नैतद्विश्वासकारणम्।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम्॥

# दुष्टः काकः



एकः नृपः आसीत्। स प्रासादे अवसत्। तस्य प्रासादस्य अङ्गणे उद्यानम् अभवत्। तस्मिन् बहवः पादपाः आसन्। तेषु काकः हंसश्च सखायौ आस्ताम्। काकः स्वभावेन खलः आसीत्। सर्वे राजकुमाराः तं हंसं काकं च पर्यचिन्वन्। एकदा खेलतः राजकुमारस्य हारः भूमौ अपतत्। हारः बहुमूल्यैः रत्नैः कृतः आसीत्। काकः तं भूम्यां पतितम् अपश्यत्। स तूष्णीं तम् आदाय अगच्छत्। नृपस्य पुरुषाः हारस्य अन्वेषणाय तत्र आगच्छन्। ते तं हंसं हारस्य विषये बहून् प्रश्नान् पर्यपृच्छन्। स तु—'न अहं हारस्य चौरः' इति सत्यम् सत्यम् अवदत्।

तेऽकथयन्—'हे हंस ! त्वं चौरः नासि। तव मित्रं काकः चौरः आसीत्। तथापि मित्रार्थे त्वं येन केन प्रकारेण हारम् आनय। अन्यथा नृपस्य आदेशेन वयं त्वां हनिष्यामः' हंसः अवदत्—'अहं हारं न अचोरयम्, दण्डं च न अर्हामि।'

तेऽकथयन्। सत्यं कथयसि। तथापि काकः तव मित्रम् स चौरः। त्वं तस्य सहचरः। त्वं मित्रस्य दण्डं सहस्व। इति उक्त्वा ते हंसे बाणम् अक्षिपन्। हंसः पञ्चत्वम् अगच्छत्। अतः उच्यते—

खलः करोति दुर्वृत्तं नूनं फलति साधुषु।
दशाननोऽहरत् सीतां बन्धनं च महोदधेः॥

## परानुकारी खरः



एकः वणिग् आसीत्। तस्य गृहे गर्दभः वृषभश्च पालितौ आस्ताम्। पशू तौ तस्य वणिजः भारान् अवहताम्। एकस्मिन् दिने स वणिग् गर्दभे तूलम्, वृषभे लवणगोणीं च निधाय हट्टं प्रातिष्ठत। मार्गे काचिद् गिरिणदी आसीत्। नद्यां गाधं जलम् अभवत्। तां उत्तरताम् उच्चावचेन मार्गेण गच्छतां च तेषां महान् प्रयासः अजायत। भाराक्रान्तः श्रान्तः स वृषभः जले अपतत्। जलस्य धारायाः संयोगेन लवणम् अद्रवत्। तेन वृषभस्य भारः न्यूनः अभवत्। स उत्थाय लघुभिः पदैः सुखेन अगच्छत्।

इति वीक्ष्य गर्दभोऽपि भारं लघूकर्तुं मनो दधे। सोऽपि आत्मानं जले अपातयत्। तद् वीक्ष्य वणिक् क्रुद्धः अभवत्। स दृढेन वेत्रेण तम् अतिशयम् अताडयत। तूलस्य भारश्चापि जलं धृत्वा परां गुरुतां आप। खरः स परेण कष्टेन तं वोढुम् अशक्नोत्। ततः मूढः स गर्दभः स्वस्य दुर्बुद्धिं निन्दन् परं पश्चात्तापमकरोत्। अत उच्यते —

परानुकारं यो मूढः कुरुते दृष्ट्वा परोदयम्।
स भवत्युपहासाय सन्तापाय च कल्पते॥

---

## वञ्चको जम्बूकः



एकदा कश्चित् काकः कुतोऽपि अपूपस्य शकलम् अलभत। स तं चञ्च्वा समादाय कंचित् तुङ्गं वृक्षम् उपाविशत्। एकः

शृगालः तम् अपश्यत्, अचिन्तयच्च—'अहो ! केनापि प्रकारेण अस्मात् मूर्खवायसात् इदमपूपस्य खण्डम् आदेयम्। इति विचार्य स तरोः तलम् उपागच्छत्, अवदच्च तं काकम्—भोः मित्र ! बहोः कालात् दृष्टिपथं समायातोऽसि, अपि वर्तते तव अनामयम् ? घन इव श्यामं त्वां वीक्ष्य नवजलद इव श्यामः भगवान् श्रीकृष्णः स्मरणपथम् आयाति। अतिशयं मनोहराणि तव पतत्राणि, सुकोमलं श्यामलं सुन्दरं च तव शरीरम्। अहं तव वदनकमलं वीक्ष्य परमां मुदम् अनुभवामि। नहि भूतले कोऽपि शुकः पिकः सारिका मयूरो वापि तव सौन्दर्यं स्पृशति। 'आकृतिवन्तः खलु गुणवन्तः भवन्ति' इति त्वयि एव घटते। यथा तव मधुरा आकृतिः, उदात्ताः गुणाश्च सन्ति तथैव स्वरः अपि ते मधुरः स्यात् इति तर्कये।

कृपयस्व चणं गातुम्। येन कर्णामृतं तव गानं श्रुत्वा कृतार्थः भवानि। इत्थं स्वस्य स्तुतिं श्रुत्वा वायसः परमेण गर्वेण मुखं व्यादाय यावत् गातुम् आरभत, तावद् अपूपखण्डं भूमौ अपतत्। शृगालः तद् आदाय काकस्य मौर्ख्यम् उपहसन् स्वगृहम् अगच्छत्। इत्थं च चाटुकाराः अज्ञाः बुद्धिमतः अपि वञ्चनाय अलम्। अ उच्यते—

अन्तर्मलिनचित्तेन बहिराह्लादकारिणा।
विपद्गुटैः फलेनेव के खलेन न वञ्चिताः॥

---

# खलो वानरः



एक धीवरः आसीत्। तं जनाः सुजातम् अकथयन्। सुजातः स वानरम् अपालयत्। वानरः स परमया भक्त्या सदैव तस्य आदेशान् अन्वतिष्ठत्। यत्र यत्र स धीवरः अगच्छत्, वानरः अपि तत्र तत्र तम् अन्वगच्छत्। एकस्मिन् दिने सुजातः दध्योदनं पाथेयम् आदाय ग्रामान्तरं प्रातिष्ठत। वानरः अपि तस्य सहचरः अभवत्। गच्छतोः तयोः मार्गे भोजनस्य वेला अजायत। धीवरः स एकं तडागम् अपश्यत्। तडागस्य तटे एकः वृक्षः आसीत्। स तस्य तले वस्त्राणि उत्तार्य पाथेयं च निक्षिप्य वानरं च तत्र रक्षायां नियुज्य स्नानार्थं तडागम् अविशत्।

अस्मिन् अवसरे वानरः सर्वं पाथेयं भक्षयित्वा मुखं स्वच्छीकृत्य अजानानः इव अतिष्ठत्। तदैव कश्चिद् अजः जलं पातुं तत्र समागच्छत्। स वानरः किञ्चिद् दधि कांश्चिद् भक्तस्य कणान् च तस्य मुखे विलिप्य वृक्षम् आरोहत्। अस्मिन्नन्तरे सुजातः स्नानं कृत्वा प्रत्यागच्छत्। स निःशेषं पाथेयं भक्षितम् अपश्यत्। स समीपे स्थितस्य अजस्य मुखे लग्नं दध्योदनं विलोक्य, 'अनेन एव दुष्टेन मम पाथेयं भक्षितम्' इति मत्वा तं दण्डेन प्राहरत्, अकरोत् च मृतप्रायम्।

एवं दुर्जनाः जनाः स्वयम् अपराधान् कुर्वन्ति, दोषं च परेषु निक्षिपन्ति। अन्ये च दण्डं सहन्ते वराकाः। अत एव

दुर्जनेन सह कदापि न तिष्ठेत्। अत उच्यते—

यथा परोपकारेषु नित्यं जागर्ति सज्जनः।
तथा परापकारेषु जागर्ति सततं खलः॥

## मूर्खो वायसः



एकः काकः आसीत्। स एकं तडागम् अगच्छत्। स तत्र हंसम् अपश्यत्। स अचिन्तयत्। हंसः श्वेतः अस्ति। अहं कृष्णः अस्मि। स अवर्णः अस्ति। अहं सवर्णः अस्मि। अवर्णे कः गुणः? सवर्णे तु बहवः गुणाः सन्ति। अहो मूढता जनानाम्। न ते गुणानां परीक्षकाः सन्ति। ते अवर्णान् वर्णयन्ति। ते शुभ्रं कल्पितं च वेषं वीक्ष्य मुह्यन्ति। किं नु जानाति वराकः हंसः? तं जनाः पूजयन्ति। मां तु कार्येषु कुशलमपि ते तिरस्कुर्वन्ति। सत्यं जनाः मूर्खस्य हंसस्य शुक्लं नेपथ्यं बहुगुणं मन्यन्ते। यथोच्यते—

कलाहीनोऽप्यविद्योऽपि सभायां वस्त्रवेष्टितः।
मूर्खोऽपि शोभते तावत् यावत् किञ्चिन्न भाषते॥

तद् अहमपि गौरः भवामि। येन जनाः मां पूजयेयुः। इति विचिन्त्य स तडागस्य तीरे उपविश्य स्वस्य शरीरं पुनः पुनः अरिष्टैः अन्यैश्च श्वेतैः चूर्णैः मर्दयित्वा मुहुर्मुहुः जलेन स्नानम् अकरोत्। स सितां विभूतिं श्वेतं चन्दनं च देहे अचर्चयत्। तथापि स गौरः न अभवत्। ततः स कालिमां दूरीकर्तुं निजं

देहम् इष्टकाभिः अघर्षत् । एवं स चिरं स्वकीयं कायम् अपीडयत् । तदपि स गौरः न अभवत् । घर्षणेन तस्य शरीरे अनेके व्रणाः अभवन् । पक्वतां गतेभ्यः तेभ्यः तस्य ज्वरः अभवत् । तेन स पञ्चत्वम् अगच्छत् । तद्वीक्ष्य अन्ये खगा अवदन्–

दह्यमानः सुतीव्रेण नीचः परयशोऽग्निना ।
प्रवृत्तः परनाशाय स्वनाशाय प्रपद्यते ॥

---

## रटनः शुकः

—*(०)*—

कश्चित् केशवः नाम चारणः आसीत् । स शुकम् अपालयत् । स तं संस्कृतम् अपाठयत् । शुकः पठने दक्षः न आसीत् । स मूढः अभवत् । केशवः तं केवलम्, 'अत्र कः संदेहः' इति वाक्यं कण्ठे अकारयत् । यदा कोऽपि आगत्य 'किं संस्कृतं पठसि' इति पृच्छति, तदा स शुकः 'अत्र कः संदेहः' इति निश्चितम् उत्तरं ददाति । यदि कोऽपि पृच्छति 'अपि कुशलोऽसि' तदापि 'अत्र कः संदेहः' इत्येव तस्य उत्तरं भवति । यदि च स्वामी 'कृतभोजनोऽसि' इति पृच्छति तदापि 'अत्र कः संदेहः' इत्येवं स शुकशावकः उत्तरं ददाति ।

ततः केशवः तं विक्रेतुम् ऐच्छत् । स तं शोभने पञ्जरे निधाय आपणम् अनयत् । लोकाः आगत्य तस्य मूल्यम् अपृच्छन् । केशवः 'शतरूप्यकाणि शुकस्यास्य मूल्यम्' इत्यवोचत् । ते अत्यधिकम् अस्य मूल्यम्, इत्युक्त्वा अगच्छन् । ततः कश्चिद्

भूपालः आगत्य 'भो ! किमत्र शुकशावके वैचित्र्यम् , येनास्य महन्मूल्यम्' इति चारणं तमपृच्छत् । तदा चतुरः स चारणः 'शुकमेव पृच्छतु भवान् , स एव कथयिष्यति स्वस्य मूल्यम्' इति अवादीत् । ततः स राजा शुकमपृच्छत् ,—किं ते कीर ! शतरूप्यकाणि मूल्यम् ?' इति ।

शुकस्तु झटित्येव 'अत्र कः संदेहः' इत्यवादीत् । तेन स राजा अतिशयं प्रसन्नः अभवत् । स तस्य स्वामिने चारणाय शतरूप्यकाणि दत्त्वा तं शुकशावकं च गृहीत्वा स्वगृहम् अगच्छत् । सौधगतः स नृपः स्वहस्तेन तं शुकं दाडिमबीजानि अखादयत् अपृच्छत् च बहुविधान् प्रश्नान् । शुकस्तु विशेषम् अजानानः 'अत्र कः संदेहः' इत्येव प्रत्यवोचत् । तदा नृपतिः निर्विण्णः इव तम् अपृच्छत् 'किमहं तव कृते शतं दत्त्वा मूर्खोऽभवम् ?' शुकस्तु पुनरपि, 'अत्र कः सन्देहः' इत्यवादीत् । अस्मिन् वारे शुकस्य उत्तरं समुचितम् आसीत् । भूपतिस्तु शुकं मुक्त्वा अहो ! प्रतारितोऽस्मि खलेन चारणेन इत्युक्त्वा इमं श्लोकमपाठीत्:—

कीरश्च दुर्जनजिह्वा च प्रतिकूलविसर्पिणी ।
परप्रतारणायैव दारुणा केन निर्मिता ॥

## अलसो बालः

एकः बालकः आसीत् । स अलसः अभवत् । स नित्यं पाठशालाम् न अगच्छत् । स कक्षायाः कार्यं सम्यक् न अकरोत् ।

स एकस्मिन् दिने—'अद्य अहं पाठशालां न गमिष्यामि, उद्याने गत्वा कन्दुकेन क्रीडिष्यामि' इति अचिन्तयत्। ततः स उद्यानम् अगच्छत्। उद्याने कः अपि बालः न आसीत्। स 'केन सह क्रीडामि' इति अचिन्तयत्। ततः स एकं काकम् अपश्यत्। स अवादीत् 'हे काक! आगच्छ, मया सह रमस्व' इति। स काकः 'मम कार्यं वर्तते, अवकाशः नास्ति, त्वमेव खेल' इति अवदत्। ततः सारमेयम् अपश्यत्। स तं संबोध्य 'आगच्छ रे सारमेय! मया साकं क्रीड' इति अवदत्। ततः स सारमेयः 'मम कार्यं वर्तते, अहम् अलसः न अस्मि, त्वमेव खेल' इति अवोचत्। ततः स शुकम् अपश्यत्। स अकथयत् 'आगच्छ रे कीर! मया सह रमस्व' इति। स शुकः 'मम कार्यं वर्त्तते, त्वमेव खेल' इत्यवादीत्। ततः स पिपीलिकाम् अपश्यत्। स ताम् अपृच्छत् 'एहि पिपीलिके! मया सार्धं रमस्व' इति। सापि 'त्वमेव रमस्व, मम वेला अतिगच्छति' इत्यवादीत्। ततः स अलसः बालकः अचिन्तयत्—अस्मिन् संसारे खगाः मृगाः कीटाः अपि अलसाः न सन्ति। अहमेव किमर्थम् अलसः भवामि इति। तदा स पाठशालां गत्वा स्वस्य पाठान् अपठत्, अभवत् च पण्डितः। ततः स इमं श्लोकम् अपठत्।

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।
नास्ति उद्यमसमो बन्धुः यं कृत्वा नावसीदति॥

# धनपालः श्रेष्ठी

कस्मिंश्चिद् ग्रामे धनपालः नाम श्रेष्ठी आसीत्। स धनाढ्यः अभवत्। तस्य गृहे स्वर्णम्, रूप्यकम्, रत्नानि, भृत्याः, बहिश्च क्षेत्राणि, उद्यानानि, कूपाः, गावः अश्वाश्च आसन्। परन्तु स कृपणः आसीत्। न स कदापि दानं ददाति स्म, नापि च स्वस्य हिते उपयुनक्ति स्म धनम्। स सदैव तां महतीं धनराशिं प्राणेभ्योऽपि गरीयसीं मत्वा दान-भोग-नाशेभ्यः अरक्षत्।

एकदा सः—"यदि दैवाद् व्यापारे हानिः भवेत्, चौराः स्वर्णं रत्नानि वा चोरयेयुः, दायादाः भागमादद्युः, नृपः करमाहरेत्, अन्येन चापि केनापि प्रकारेण मे विपुलं धनं नश्येत्, तदा तु मे प्रणाशः एव आपद्येत—

धनानामर्जने दुःखमर्जितानां च रक्षणे।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः॥

इत्यचिन्तयत्। एवं विचार्य स सर्वाणि धनानि धान्यानि क्षेत्राणि उद्यानानि पशूनपि च विक्रीय स्वर्णम् अक्रीणात्। स तस्य कनकस्य एकां शिलाम् अकारयत्। तां शिलाम् आदाय स नद्याः तटे एकस्मिन् अनुर्वरे क्षेत्रे न्यखनत्। स नित्यं नद्यां स्नानच्छलेन तत् क्षेत्रं गत्वा तां स्वर्णराशिं दर्शं दर्शं मनसि परमानन्दम् अन्वभवत्।

एकदा कश्चित् चौरः तं धनपतिं विजने क्षेत्रे विचरन्तम् अपश्यत्। स तस्य अभिप्रायं ज्ञात्वा शनैः अलक्षितः एव

तमन्वगच्छत् । श्रेष्ठी तु गर्ते गुप्तां तां स्वर्णस्य शिलां दृष्ट्वा-'विपुलं मे स्वर्णमस्ति' इति सुखमनुभवति, इति स चौरः अपश्यत् । ततः स धनपालः गर्त्तस्य मुखं पाषाणस्य शिलया पिधाय गृहं प्रत्यगच्छत् ।

अन्यस्यां रात्रौ चौरः तमुद्देशं गत्वा तां सुवर्णशिलाम् अचोरयत् । अन्यस्मिन् प्रभाते च क्षेत्रं गतः स धनपालः तां स्वर्णशिलां तत्र न अपश्यत् । स शिरो गृहीत्वा वक्षः ताडयन् भृशम् अरोदीत् । ततः स गृहं गत्वा सर्वान् स्वस्य पारिवेशिकान् तद् वृत्तं कथयाञ्चकार । ते प्रोचुः--

दानं भोगो नाशः तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥

## निर्विण्णो मुण्डी



अथ धारानगरीं कश्चिन् मुण्डी समागच्छत् । स नद्यास्तीरे कुटीरं कृत्वा न्यवसत् । ततः सः 'आपदर्थे धनं रक्षेत्' इति नीतिवचनं हृदि निधाय इतस्ततः सुभिक्षां कृत्वा विपुलं धनं सम्पाद्य एकस्मिन् ताम्रभाजने निक्षिप्य अरक्षत् । न स चोर-भयात् कदाचित् शून्यां कुटीम् अमुञ्चत् । ततः कदाचिन् मकर-संक्रान्तौ पुण्यकालः समागच्छत् । बहवो धर्मात्मानः पर्वस्नानार्थं दानभाण्डानि गृहीत्वा उज्जयिनीं प्रातिष्ठन् । गतानुगतिकः सोऽपि मुण्डी धनपूर्णं तत् ताम्रभाजनं स्कन्धे निधाय तान् अन्वग-च्छत् । दिवारात्रं चलन्तः ते सिप्रातीरं प्रापुः । रात्रौ धनपूर्णस्य

घटस्य यत्नेन स यतिः श्रान्तोऽभवत्। न स घटस्य तस्य रक्षणे कस्यापि परिचितस्य साधोरपि विश्वासमकरोत्। प्रभाते शौच-स्नानसमये रजतराशेः तस्य घटस्य रक्षणे उपायं चिन्तयामास। स सैकते सिप्रातटे वालुकायां गर्त्तं कृत्वा तदन्तः कलशं निधाय पुनः सिकताभिः गर्तं पूरयामास। तस्योपरि च सैकतं शिवलिङ्गं निर्माय बिल्वपत्रैः पुष्पैः फलैश्च पूजयामास, ततः शौचं स्नातुं च अगच्छत्। एतस्मिन्नन्तरे जनमेलकं दिशं प्रससर्प। गतानुगतिकाः जनास्तत्र सैकतं शिवलिङ्गमर्चितं वीक्ष्य, 'अस्माभिरपि अत्र तीर्थे आगतैः एवमेव कर्त्तव्यमिति मत्वा बहूनि ते शिवलिङ्गानि निर्ममुः, पूजयामासुश्च।

स्नानं कृत्वा प्रत्यागतः स मुण्डी सर्वं सिप्रातटं शिवलिङ्गमयं दृष्ट्वा 'क मे मुद्राभिः पूर्णं तत्ताम्रभाजनम्' इति निश्चेतुमशक्तः परमं नैर्विण्यं गतः इमं श्लोकं पपाठ—

यद्यदाचरति श्रेष्ठः लोकस्तदनुवर्तते।
गतानुगतिको लोको न लोकः पारमार्थिकः॥



## बिडालस्य गले घण्टा

एकस्मिन् गृहे बहवो मूषका आसन्। ते गृहस्वामिनो महतीं हानिमकुर्वन्। ते गृहे सञ्चितानि धान्यानि अभक्षयन्, भित्तिषु बिलानि अकुर्वन्, कोष्ठानां कपाटान् अच्छिन्दन्, बहुमूल्यानि वस्त्राणि अकृन्तन्, घृतं तैलं मरिचानि मिष्टान्नानि गुडं शर्करां च बहूनि वस्तूनि अखादन्।

इत्थं च प्रत्यहं मूषकैः कृतया महत्या हान्या गृहस्वामी परमं विषादमापेदे। ततः स उपायान् चिन्तयामास। स बिडालं पालयामास। बिडालः स तान् मूषकान् गृहीत्वा खादितुं लग्नः। बहवो मूषकास्तेन भक्षिताः। मूषकास्ते स्वकुलस्य क्षयं वीक्ष्य उपायान् चिन्तितुमारब्धाः। एकस्मिन् दिने ते मूषकाः महतीं सभां योजयामासुः। तत्र दूरदूरात् मूषकमहानुभावाः समाजग्मुः। अभून्मूषकानां महासम्मेलनम्। तत्र तेषां मित्राणि सम्बन्धिनो बान्धवाः मातुलाः श्यालाः श्वशुराश्च सम्मिलिता आसन्। महता समारोहेण तेषां सभाकार्यं प्रारब्धम्। बहवस्तत्र दशनैकप्रहरणा मूषकमहाभटाः, मथितानेकशास्त्रपुस्तकपुञ्जाः, बहुनिष्कपटद्वेषिणः उन्दुरुमहावीराः, मूषकाचार्याः मौषिकनीतिविशारदाश्च पुष्टापुष्टत्वलम्बालम्बलांगूलत्वादीन् भेदान् विहाय जातीयोन्नतये बिडालविजयाय च मन्त्रणां समारब्धवन्तः। विभिन्नाः प्रस्तावा अभवन्। अनेके बुद्धिमन्तो मूषकाः बिडालस्यावरोधाय युक्तीः प्रदर्शयांचक्रुः। न कश्चित्सफलोपायो निश्चितः। चिरं विचार्य कश्चिद् बुद्धिमतां वरो मूषको युवाऽब्रवीत्—'अहो! बान्धवाः! बिडालस्य कण्ठे यदि घण्टा बद्धा स्यात्, तर्हि अस्माकं रक्षा भवेत्, बद्धघण्टं तमायातं ज्ञात्वा सावधाना वयं पलाय्य नः प्राणरक्षां कर्तुं शक्नुमः।

इति श्रुत्वा सर्वेऽपि मूषकाः हर्षप्रकर्षेण नर्तितुं लग्नाः। ते सर्वे प्रस्तावकस्य तस्य प्रज्ञायाः महतीं प्रशंसामकुर्वन्—'धन्योऽसि, कृतविद्योऽसि त्वम्, यो बिडालस्य पराभवाय ईदृशान्

उपायान् जानासि, त्वोपदिष्टे उपायेऽनुष्ठिते बिडालभयात् मोक्षो नः भविष्यतीति मन्यामहे वयम्।

ततः कश्चित् वृद्धो मूषको यः सर्वैस्तैः प्रोक्तान् प्रस्तावान् शृण्वानः आसीत् इदानीमुपसृत्योवाच—'अहो ! उपायज्ञा भवन्तः, जानन्ति सर्वान् विरोधविधीन्। देवगुरोः बृहस्पतेः प्रज्ञामिव न कोपि युष्माकं बुद्धेः तुलामर्हति मन्त्रालोचनायाम्। तथापि कातरस्य मे मनसि भयं वर्तते इति हेतोः—'को भवत्सु बिडालस्य कण्ठे घण्टां बद्धुं प्रभविष्यति, इति ज्ञातुमिच्छामि।'

इत्थं वृद्धमूषकस्य तस्य वचः श्रुत्वा चकितास्तेऽन्योन्यस्य मुखं पश्यन्तो न किमपि वक्तुं प्राभवन्। तदा स वृद्धः उन्दुरुः 'न जनः निरर्थकानि कार्याणि कुर्यात्' इत्युवाच—

अफलानि दुरन्तानि समव्ययफलानि च।
नारभेत ह्यशक्यानि वस्तूनि च विचक्षणः॥

## यादृशो देवस्तादृशो बलिः



एकदा कश्चिद् वृकः कंचिद् गर्दभं ग्रामोपान्ते चरन्तमपश्यत्। 'यदृच्छालब्धेनानेन खरहतकेनाद्य यथेच्छं मे भोजनं भविष्यति' इति स मनसि अचिन्तयत्। गर्दभस्तु वराकः सहसोपनतं तं वृकं वीक्ष्य भयेन किंकर्तव्यविमूढोऽभवत्। स पलायितुमपि न प्राभवत्। ततो वृको गर्दभस्य समीपमागत्य—'अपि वर्ततेऽनामयं तव मित्र ! गर्दभराज ?' इत्यपृच्छत्। सोऽपि कथं-

चिद् धैर्यं धृत्वा कम्पितेन स्वरेण 'सर्वथाऽनामयं मे वर्तते प्रभोः जगदीश्वरस्य कृपया, आगच्छ, स्वागतं ते अतिथिरसि' इत्यवादीत् ।

स गर्दभोऽपि न केवलं गर्दभ एवासीत् । स कार्यकाले धीमान् विपदि धैर्यशीलश्चाभवत् । सोऽकस्मादागतां विपत्तिं वीक्ष्य धीरेण मनसा उपायमचिन्तयत् । स खञ्ज इव विकलगतिमात्मानं प्रादर्शयत् । वृकः पुनस्तस्य समीपमुपसृत्यावादीत्—'अये मित्र ! कथं नु पंगुः संवृत्तोऽसि ? केन वा पंगुतां प्रापितोऽसि ? कस्ते शत्रुः, येन त्वमिमां दयनीयां दशां गमितः ।' गर्दभस्तु—'वने चरतो मे वामः पादः कण्टकेनापविद्धः, तेनाहं पंगुतां गतोऽस्मि । यदि भवान् मम कण्टकं निःसारयेत्, नाहं चिरं परोपकारं विस्मरिष्यामि' इत्यब्रवीत् ।

अहो ! लब्धावसरोऽहमिदानीम् । कण्टकनिःसारणच्छलेनास्य पादं मुखेन गृहीत्वा पीनमिमं गर्दभं पातयिष्यामि भक्षयिष्यामि च सुखेन, इति मनसि विचार्य यावत् स गर्दभस्य समीपमुपागच्छत्, तावदेव स पश्चिमाभ्यां पादाभ्यां वेगेन वृकस्य मुखे लत्तया प्राहरत् । क्रूरया तया खरस्य लत्तया वृकस्य सर्वेऽग्रदन्ताः विशीर्णा अभवन् । स रक्तं वमन् पलायमानो वनमविशत् । गर्दभस्तु स्वच्छन्दं शनैः शनैर्गच्छन् नातिविलम्बेन स्वामिनो गोष्ठद्वारमध्यतिष्ठत् ।

गर्दभं हन्तुकामस्य वृकस्य दशनावलिः ।<br>पातिता लत्तया तेन यथा देवस्तथार्चनम् ॥



# मार्कण्डेयशिष्यौ



पुरा मार्कण्डेयस्य मुनेः उपपन्नोऽनुपपन्नश्च शिष्यौ अभवताम्। गुरोः आश्रमस्य समीपे एव तौ अपि तृणकुटीरयोः न्यवसताम्।

मनोयोगेन अध्ययने व्यापृतयोः तयोः बहुतिथः कालः व्यतिक्रामत्। एकस्मिन् दिने गुरुः तयोः परीक्षार्थं ताभ्याम् एकैकं पणकं दत्त्वा अवादीत् भोः 'छात्रौ! स्वं स्वं पणकं गृहीत्वा आपणं गच्छतम्, आनयतं च किमपि तादृग् वस्तु येन युवयोः कुटीरौ आपूरितौ भवेताम्' इति। अनुपपन्नस्तु यथा नाम तथागुणः आसीदेव। स झटित्येव कस्यापि कृषाणस्य खलात् पणकस्य पलालम् आनयत्। स तेन स्वस्य कुटीरं पूरयित्वा गुरोः पुरस्तात् उपातिष्ठत् अकथयच्च सम्बोध्य गुरुवरम्–'पश्यतु आचार्यः, पूरितो मया कुटीरः'। इति गुरुः सविषादं शिरः कम्पयन्, समीचीनमसमीचीनं वा इति न किमपि अवादीत्।

उपपन्नस्तु क्षणं विचार्य विपणिम् अगच्छत। ततः स दीपं वर्तिकां तैलं च समानयत्। स दीपं प्रज्वाल्य कुटीरे न्यदधात् न्यवेदयच्च गुरुं प्रणम्य 'पश्यतु आचार्यः, पूरितो मया कुटीरः अस्य दीपस्य प्रकाशेन इति' कथं नु मन्यते भवान्? तदा आचार्यः सानन्दं शिरःकम्पं कृत्वा अवादीत्–सत्यम् उपपन्नोऽसि, सफलाः सन्तु ते मनोरथाः, वर्धस्व ज्ञानसमृद्ध्या नित्यम्।

ततः आरभ्य उपपन्ने तस्मिन् शिष्ये गुरोः प्रीतिः सुतरामवर्धत। गुरुकृपया स अचिरादेव सर्वाणि शास्त्राणि अधीत्य पण्डितो भूत्वा गृहम् अगच्छत्, अन्वभवत् च शिक्षितानां विद्यानां फलम्।

छात्राः! युष्माभिरपि सदैव उपपन्नबुद्धिभिः भाव्यम्। उपपन्नेषु बालकेषु सर्वेषां प्रीतिः भवति। तेषु मातापित्रोः गुरूणां च स्नेहो वर्धते। तेषु पराः अपि प्रीतिमन्तः संजायन्ते। यथोच्यते—

उपपन्नेषु बालेषु प्रीतिः संजायते नृणाम्।
गुरूणां च विशेषेण ते प्रयान्ति निधानताम्॥



## सत्यं जयति



कस्मिंश्चिद् ग्रामे कश्चिद् मेषपालः आसीत्। स अजाः मेषाः बर्कराश्च अपालयत्। तस्य पुत्रः क्षेत्रपालः नित्यं तान् चारयितुं वनम् अनयत्। मध्ये वनं स पशून् अचारयत्। वनोपकण्ठे कृषकाणां क्षेत्राणि आसन्। ते सदैव तत्र खननं वाहनं वपनं लवनं च अकुर्वन्। 'मूर्खस्य मस्तिष्कमपायानामयनम्' इति न्यायेन एकदा स मेषपः 'व्याघ्रः समायातः, व्याघ्रः समायातः' इति मुधा उच्चैः आक्रोशम् अकरोत्। तस्य आक्रोशं श्रुत्वा क्षेत्रेषु कार्ये व्यापृताः सर्वे क्षेत्रपालाः आयुधानि गृहीत्वा तस्य रक्षार्थं समागच्छन्। तदा स बालिशः तान् वीक्ष्य व्यहसद्

अवादीच 'नास्ति व्याघ्रः, मया परिहासेन इदं विजल्पितमिति'। एवं स अनेकदा तान् अवञ्चयत्।

एवं गच्छति काले एकदा परमार्थतः तत्र व्याघ्रः समागच्छत्। तं दृष्ट्वा स उच्चैः स्वरेण व्याघ्रः आयातः, व्याघ्रः आयातः इति बहून् आक्रोशान् अकरोत्। तद्दिने शृण्वन्तः अपि क्षेत्रपाः तद्वचनस्य उपेक्षां चक्रुः। ते ऊचुः–एष मेषपालयुवा असत्यं वदति, अस्मान् उपहसति च, अस्य वचनं न श्रोतव्यम् अस्माभिः इति।

एवं चिन्तयन्तः ते तस्य रक्षार्थं न अगच्छन्। व्याघ्रः मेषपालं तस्य बहून् पशून् अपि व्यापाद्य अभक्षयत्।

छात्राः! न कदापि यूयं वदत असत्यम्। ये जनाः असत्यं वदन्ति, तेषां वचनेषु कोऽपि विश्वासं न करोति।

अन्ततः तदेव असत्यं वक्तुः विनाशाय प्रकल्पते। अत एव उच्यते–

सत्यासत्ये मनुष्याणां रक्षके भक्षके च ते।
सत्यं वदत भोः! लोकाः! स्वार्थरक्षणहेतवे॥



## चतुरो देवीदासः



एकस्मिन् नगरे कश्चिद् देवीदासः नाम स्वर्णकारः अभवत्। स सदैव धनिनां कुटुम्बिनां गृहाणि गत्वा मनोहराणि स्वर्णरजतभूषणानि कृत्वा कुटुम्बभरणम् अकरोत्। लोभोदयेन

स स्वर्णचौरः अजायत। न स कस्यापि भूषणं कारयितुः धनिनः सकलं स्वर्णम् ददाति स्म । हस्तलाघवेन स पश्यतोऽपि स्वर्णं चोरयति स्म । दृष्टमात्रमेव स्वर्णं तस्य हस्तगतम् अभवत् । सर्वे जनाः तं स्वर्णचौरम् आख्यन् । इत्थं च स चोरितेन कनकेन धनपतिः अभवत् । स विशालं भवनम् अकारयत् स्वकीयम् आपणं च ।

एकदा तस्य गृहे चौराः प्राविशन् । तेऽशेषमेव तस्य धनम् अपाहरन् । तेन स परमां दारिद्र्यदशां प्राप । प्रथमे तु स स्वर्णचौरः द्वितीये च दरिद्रः इति न कोऽपि तेन भूषणानि अकारयत् । स नित्यं चिन्तातुरः स्वभवनचत्वरे अतिष्ठत् ।

सर्वे धनिनः नागरिकाः तस्य परिचिताः आसन् । एकदा कोऽपि चन्दनदासो नाम धनाढ्यः तद्भवनसम्मुखीनेन मार्गेण गच्छन् तम् अपश्यत् । स अवादीत्–कथं भो देवीदास ! चिन्तातुर इव लक्ष्यसे ? कथं न तव घनानि स्वर्णं ताडयन्ति ? देवीदासः प्राह–आम्, श्रेष्ठिन् ! अधुनाऽहं चिन्तातुरोऽस्मि । अधनोऽस्मि संजातः । कुटुम्बभरणमपि न पारयामि । न कोऽपि स्वर्णमयानि भूषणानि मम हस्तेन कारयति । अकर्मण्योऽस्मि संवृत्तः । किं करोमि क्व गच्छामि । किंकर्तव्यविमूढोऽस्मि । नाधुना स्वर्णस्य दर्शनमपि संजायते । यदि कथमपि स्वर्णस्य दर्शनमपि भवेत्, तर्हि मम घनानि तूष्णीं न तिष्ठेयुः । चन्दनदासोऽपि तस्य वञ्चकस्वभावतां सम्यग् अजानात् । इत्थं च वदति देवीदासे नर्मोक्त्या अवादीत्–भोः ! यदि स्वर्णदर्शनमात्रेणैव भवत्कार्यसिद्धिः भवेत् तर्हि ममापणे आगत्य यथेच्छं

स्वर्णरजतयोः दर्शनं करोतु भवान् इति ।

द्वितीये दिने स प्रातरेव श्रेष्ठिनः चन्दनदासस्य विपणिं प्राप । सोऽपि तस्मै स्वागतं व्याहृत्य स्वर्णदर्शनाय विपणौ तस्य प्रवेशम् अनुमुमुदे । तत्र हैमानि भूषणानि स्वर्णशकलानां राशिं च पश्यतः तस्य हृदि चोरितुं लोभः उदियाय, परन्तु उपायो नासीदिति विचाराः मन्थरं विलीनाः । यावत् स पुनः उपायम् अचिन्तयत् तावत्स फलकस्य अधस्तात् चरन्तं नकुलम् अपश्यत् । तं नकुलं गृहीत्वा हस्तलाघवेन स तस्य मुखे कतिपयानि स्वर्ण-शकलानि प्रावेशयत् । नकुलः स तत्रैव पञ्चताम् अगच्छत् । देवीदासस्तु तं तथैव विहाय 'दृष्टं सर्वम्' इत्युक्त्वा रिक्तपाणिः एव गृहम् अगच्छत् । प्रभाते मार्जनीं कुर्वता भृत्येन स मृतः नकुलः श्रेष्ठिने दर्शितः । सोऽपि तं त्वरितमेव दूरम् अवकर-निकरे क्षेप्तुम् आदिशत् । स्वर्णकारस्तु दूरात् प्रतीक्षमाणः आसीदेव स तं तथा क्षिप्तं झटित्येव स्वगृहं निनाय, तत्र च तस्य उदरं भित्त्वा सर्वाणि तानि स्वर्णशकलानि आत्मसात् कृत्वा शवं भूमौ निचखान ।

तस्मिन्नेव सायंकाले चन्दनदासः देवीदासगृहस्य सम्मुखे पतता मार्गेण गच्छन् तं पुनः पूर्ववत् शनैः स्वर्णशकलानां तेषां निघर्षणच्छेदनतापताडनानि कुर्वन्तम् अपश्यत्, साश्चर्यम् अपृ-च्छच्च—अहो ! सद्यः फलति युष्माकं स्वर्णकाराणां स्वर्णदर्शनम् ।

देवीदास उवाच—

स्वर्णं तापितं छिन्नं घर्षितं ताडितं पुनः ।
भूषणेषु प्रणीतं च चतुरान् न जहाति नः ॥

# अतिबोधकथा

आसीत् कश्चिद् ब्राह्मणः । तस्य भार्या पुत्रम् अजीजनत् । पिता, 'प्रतिबोधः' इति तस्य नाम अकरोत् । बालः सः पितुः गृहे लालितः अवर्धत । स युवाऽभवत् । अतिबोधस्य तस्य कुलगर्वः, मातुलानीव्यसनम्, हठधर्मतादुर्गुणः, कटुवादितादोषः, परोक्षश्रवणोपेक्षा चेति सर्वाणि मूर्खचिह्नानि अभवन् । स अलसः उपद्रवकारी बुद्धिमन्यश्च आसीत् । तं दृष्ट्वा जनाः

मूर्खस्य पञ्च चिह्नानि गर्वी दुर्व्यसनी तथा ।
हठी चाप्रियवादी च परोक्तं नैव मन्यते ॥

इमं श्लोकम् अपठन् । कुटुम्बिनः परिवेशिनश्च तं निर्बोधमाहुः । बहुधा जनाः तम् उपाहसन् । स तु, केन हेतुना जना मामुपहसन्ति इत्यपि नाजानात् । स नित्यं पाठशालाम् उपातिष्ठत् । एकदा अध्यापकः पाठप्रसंगेन 'मम शिरः' इत्यस्य पदस्यार्थम् अबोधयत् । सर्वे छात्राः अर्थम् अवागच्छन् । अतिबोधस्तु निर्बुद्धितया 'गुरोः मुण्डम्' इति विपरीतं शाब्दबोधम् अध्यगच्छत् । पाठं पाठयित्वा पाठकः कक्षायाः बहिरगच्छत् । अतिबोधस्तु तत्रैव स्थितः 'मम शिरः' अर्थात् 'गुरोः मुण्डम्' इति पुनः पुनः अरटत् ।

तस्य तद्विधं रटनं श्रुत्वा कश्चित् छात्रः, अरे ! 'अशुद्धं रटसि ?' 'मम शिरः' अस्यार्थस्तु 'मे मुण्डम्' इत्येवं वर्तते । त्वं कुतोऽशुद्धं जल्पसि, इति अभाणीत् । स तु तद्वचनं श्रुत्वा

क्रुद्ध इवावादीत्। 'गच्छ रे! आगतोऽसि मां विपरीतं पाठयितुम्। किं मम श्रोत्रे न स्तः। अध्यापकोऽस्माकं 'मे मुण्डम्' इति स्पष्टमवादीत्। अतिबोधः खल्वहम्, सम्यक् जानामि चार्थान्। किं त्वं मां मूर्खं विधातुमिच्छसि? नाहम् अन्यादृशो मूर्खः, यः तव वचनेन 'तव मुण्डम्' इति रटेयम्। तव मुण्डे किं वैशिष्ट्यम्? गुरोः मुण्डं किं न वरम्?। छात्रस्तु 'कः मूर्खमनुच्छयेत्' इति वदन् निरगच्छत्। अतिबोधस्तु पुनरपि 'मम शिरः' अर्थात् 'गुरोः मुण्डम्' इत्यभीक्ष्णं रटितुं प्रावर्तत।

सायं काले गृहं गतस्य अतिबोधस्य पिता 'अद्य तव परीक्षां करोमि, आनय तव पुस्तकम्, किं पठसि, खेलस्येव वा सर्वं दिनम्' इत्यवोचत्। अतिबोधस्तु गर्वेण पुस्तकमानीय पित्रे प्रायच्छत्। 'सर्वं जानामि, परीक्षां करोतु भवान्' इत्यभणत्। ततः पिता, कथय–'मम शिरः' इत्यस्य पदस्यार्थम्। स तु हेलया 'गुरोः मुण्डम्' इत्युत्तरमददात्। पिता तु, 'अरे किं जल्पसि'? 'मम शिरः' इत्यस्यार्थस्तु 'मम मुण्डम्' इति भवति, न कदापि 'गुरोः मुण्डम्' इत्यादिशत्।

अतिबोधस्तु श्रुत्वा चक्रान्तरस्य इवाभवत्। अहो! अनेकार्थवचनं पदमिदम्। गुरुः कथयति 'मम मुण्डम्', छात्रः कथयति 'मम मुण्डम्', पिता च कथयति 'मम मुण्डम्'। कस्य कस्य मुण्डमिदम्। 'पितुः परो हिता नास्ति' इति पितुर्वचनमेव सत्यमिति सोऽचिन्तयत्। ततः पितुर्मुण्डम्, पितुर्मुण्डम्, पितुर्मुण्डम् रटितुं आरभत।

अन्यस्मिन् दिने प्रधानाध्यापकः कक्षायामागत्य नवागतस्य तस्य पाठकस्य छात्राणां च परीक्षां कर्त्तुमैच्छत् । एतस्मिन्नवसरे अतिबोधस्य पिताऽपि प्रधानाध्यापकं द्रष्टुं तत्रागच्छत् । प्रधानाध्यापकः प्रश्नान् अपृच्छत् । छात्राः उपपन्नानि उत्तराणि अददन् । अतिबोधस्यापि वारः आयातः, स तु भीतः यदि 'मम शिरः' इत्यस्य पदस्यार्थः पृष्टः स्यात्, कथमुत्तरं दास्यामि । एकतः पिता अन्यतश्च गुरुदेवः, कथं करिष्यामि, इत्यचिन्तयत् । यावत् स मनसि–'हे हनूमन् ! अद्य संकटादस्मात् त्रायस्व, पूजां ते दास्यामि' इति समकल्पत, तावत् प्रधानाध्यापकः 'मम शिरः' इत्यस्य कोऽर्थः इत्यपृच्छत् ।

किंकर्त्तव्यविमूढ आसीद् वराकोऽतिबोधः । किं स कथयेत् किं वा न कथयेत् । स क्षणं पितरं पश्यति, क्षणं च प्रधानाध्यापकम् । मनसि च, 'संकटे पतितोऽस्मि, किं करोमि, न स्फुरति उत्तरम्, नापि विपत्तिः टलति' इति स वारं वारमचिन्तयत् । प्रधानाध्यापकः 'मम शिरः' इति पुनरपृच्छत् । अस्मिन् वारे धैर्येण सः 'पाठशालायाम् गुरोः मुण्डम्', 'गृहे च पितुर्मुण्डम्' इत्युत्तरमददात् । सर्वे छात्राः प्रोच्चैर्जहसुः । अतिबोधस्तु अतिक्रान्तबोध एवासीत् । न स तेषामाशयं बोद्धुमपारयत् । तदा तेऽकथयन्—

मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥

# वर्जयेत्तादृशं मित्रम्

आसीदेकस्य वनस्य तटे कस्यचित् कृषाणस्य उटजः। तत्रैको मूषकोऽवसत्। समीपे एव स्थितस्य सरसः परे पारे कोऽपि भेकश्चावात्सीत्। द्वावपि तौ कृत्रिमौ सखायौ अभवताम्। प्रायस्तौ परस्परयोः बहूनि चाटूनि अवदताम्। भेको नित्यं मूषकस्य गृहमगच्छत्। तत्र स खादति पिबति मोदते स्म च। मूषकोऽपि तस्य स्वागतमकरोत्। सोऽपि मण्डूकेन मित्रेण समानीतानि तडागतटे भवानि बहुविधानि स्वादूनि खाद्यानि सौख्येनाभक्षयत्। एवं तयोर्बहूनि दिनानि व्यतीतानि।

एकदा मूषको मनस्यकरोत्-'अहो! यदि केनापि विधिना परिपुष्टस्यास्य भेकस्य पित्तं भक्षयेयम्, पुनर्युवा च भवेयम्। सोऽवसरं प्रत्यैक्षत, भेकोऽपि सावधानो न तस्य पाशेऽपतत्।

अथ भेको नित्यमागत्य मूषकं स्वगृहमानेतुं प्रार्थयत, परन्तु धूर्तो मूषको न तस्य गृहं गन्तुं कदापि तस्य प्रार्थनामन्वमोदत। सोऽकथयत्- मार्गे सरो वर्तते, नाहं जानामि तरणम्, कथंकारं सुमित्रस्य तव गृहदेहलीं द्रष्टुं शक्तोऽस्मि दुर्भाग्यः। अन्यदा प्रार्थितः सोऽवदत्-नाद्य मेऽवकाशः, कृषाणेन नवानि वस्त्राणि समानीतानि, तानि मया अद्यैव छेद्यानि सन्ति। पुनश्च प्रोक्तम्-

अद्य कूपाणस्य खले नवा गोधूमाःसमायाताः, मया तेभ्यो मुषित्वा अद्यैव संग्रहो विधेयः। अन्यथावसरभ्रष्टस्य विनिपातापत्तेः। एवं समये समये प्रार्थितः स मूषकस्तस्य गृहगमननिषेधाय बहूनि कारणानि निरदिशत्। एकदा महता निर्बन्धेन प्रार्थितो दैवहतकः स मूषको भेकस्य निमन्त्रणं स्वीचकार। सोपि लब्धावसरस्तस्य वधाय मनसि, निश्चित्यावदत्–मित्र! त्वं तरणं न जानासि मम पादेन तव पादौ बद्ध्वा त्वां मम गृहं नेष्यामि। तथा कृत्वा स मूषकमगाधे जले निमज्जयितुं तडागमवातरत्। सोचिन्तयत्–'यदि मूषकोऽयं म्रियेत, अस्य बिलस्थः सर्वोपि धान्यराशिः ममोपभोगाय भवेत्' इति स मध्ये मध्ये तां रज्जुं शिथिलां विधाय निष्कपटद्रोहिणे तस्मै मूषकाय बहूनि मज्जनोन्मज्जनानि अन्वभावयत्। मूषकस्तु प्राणत्राणार्थमुच्चैराक्रोशत्। तडागस्य तटे स्थितस्य वृक्षस्य शाखायां स्थितः कश्चिद् गृध्रो दुष्टमित्रयोस्तयोराचरितमपश्यत्। स वेगेनोड्डीय मण्डूकं चञ्चुसंदंशेन गृहीत्वा विहायसं समुदपतत्। भेकेन सह बद्धो मूषकोपि तेन गृहीतः, भक्षितौ च तौ द्वावपि। एवंविधं तयोस्तादृशोर्मित्रयोराचरितं विलोक्य तत्र जलेचरो मकरोऽवादीत्—

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्॥

---

# रामाधीनस्य विश्वासः



आसीत् पुरा गोदावरीतटे सज्जनपुरं नाम ग्रामः। तस्मिन् कश्चित् रामाधीनो नाम लोहकारः अवसत्। स रामस्य भक्तः आसीत्। स नित्यं प्रातः उत्थाय स्नानं विधाय मन्दिरं गत्वा गन्धाक्षतपुष्पैर्नैवेद्यादिभी रामम् अपूजयत्। ततः यावत् सायं स आपणे स्वकर्म कृत्वा पुनः सन्ध्यासमये मालां गृहीत्वा रामस्य नामानि अजपत्। एवं कुर्वतः तस्य बहूनि वर्षाणि व्यतीतानि। लोकाः तं भक्तराजम् आहुः। न स कदापि अन्यस्य देवस्य नामापि अगृह्णात्। यदि अन्यः जनः तस्य पुरतः अन्यस्य कस्यापि देवस्य नामानि उदचरत्, तर्हि स उच्चैः स्वरेण रामस्य नामानि वक्तुम् आरभत। तस्मात् स्थानात् अपलायत वा कर्णौ पिधाय दूरम्। न स कदापि अन्यस्य देवस्य मन्दिरम् अगच्छत्। राम एव केवलः तस्य इष्टदेवः आसीत्। ग्रामस्य बालकाः बहुधा तस्याग्रे अन्येषां देवानां नामानि उच्चार्य तं खली-कुर्वन्ति स्म।

गच्छता कालेन तस्य पुत्राः युवानः अभवन्। ते च पितुः आपणे कर्माणि कर्तुं प्राभवन्। तदा वृद्धस्तु न सर्वं दिनं किमपि अकरोत् विना इष्टदेवस्य रामस्य पूजाम्।

एकदा रामाधीनः पुत्रान् आहूय प्रोवाच—'अहो पुत्रकाः! अहम् इदानीं तीर्थयात्रां गन्तुं कामये। मया प्रथमे वयसि कलाः शिक्षिताः, द्वितीये धनानि समर्जितानि, इदानीं तृतीये

जीवितसापाने वर्ते, धर्मस्य हेतोः शरीरपातमपि न शोचामि' इति अभिधाय सकलस्य कुटुम्बस्य स्वीकृतिं लब्ध्वा स तीर्थयात्रां कर्तुं प्रातिष्ठत ।

हरिद्वारं गच्छन्तं मार्गे कश्चिद् यवनः तम् अपश्यत् । सोऽपि तेनैव पथा ग्रामान्तरं गच्छन् आसीत् । स रामाधीनस्य ललाटे तिलकं गले तुलसीमालां च दृष्ट्वा, नूनमयं कश्चिद् भक्तः इत्यनुमेने । स यवनः नास्तिकः आसीत् । नाभवत् तस्य स्वदेवतायां खुदायाम् अपि विश्वासः । बहुधा स देवपूजकान् परिजहास । ततः स दूरादेव हसन् रामाधीनं पर्यपृच्छत्–'अहो भक्तराज ! शुभं तव दर्शनम् । कुतः समायातो भवान् ? क्व च गमिष्यतीति ? इति श्रुत्वा रामाधीनः नम्रतया स्वपरिचयं ददौ । सोऽपि यवनः मधुरैः परिष्कृतैश्च वचनैः तेन सह भाषमाणः अचिरादेव 'सख्यं सतां साप्तपदीनमुच्यते' इति न्यायेन मैत्रीम् उदपादयत् । ततश्च कथाप्रसङ्गेन पर्यपृच्छत्–

अहो भक्तराज ! 'यवनानाम् अस्माकं खुदा महान् वर्तते, उत हिन्दूनां युष्माकं रामः? इति मे संशयं छिन्धि' । इति श्रुत्वा रामाधीनः अवादीत्–'श्रूयतां भोः, तौ द्वौ अपि समानौ अभिन्नौ च इति मन्ये, तथापि यस्य या भावना वर्तते तस्य सैव फलदा जायते, 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी' इति जनश्रुतेः [illegible]। तु रामे दृढः प्रत्ययः स एव मम सर्वाणि कार्याणि साधयति, रामाधीनः खलु अहम् । इति श्रुत्वा यवनः उवाच,–'कथं नु रामः खुदा च अभिन्नौ समानौ च भवितुमर्हतः ?

अस्माकं यवनानां खुदा सुतरां सप्तमे आकाशे वर्तते न स कदापि भूमौ अवतरति, रामस्तु तव कथनानुसारं सर्वत्रैव वर्तते इति तयोः महदन्तरम्।

एवं चिरं विवदमानाभ्यां ताभ्यां निर्णीतम्, यद् रामो वा, खुदा वा महान्, इति परीक्षणीयम्। नातिदूरं गतयोः तयोः पन्थाः कांचिन् नदीम् अवाप्नोत्। द्वौ अपि तौ हिन्दुयवनौ तां नदीं तरीतुमैच्छताम्।

तदा रामाधीनः उवाच—भो मित्र! पश्यतु भवान्, अत्र नौका नास्ति, नदीतरणं च आवयोः परमम् आवश्यकम्, अत्रैव नौ इष्टदेवतयाः परीक्षापि च करणीयास्ति। यस्य देवस्य नामोच्चारणमात्रेण आवां नदीं तरेव, स एव देवो महान्। यदि तु आवां स्वस्वदेवस्य नाम उच्चरन्तौ सममेव नदीं तरीतुं प्रभवाव, तर्हि तौ देवौ अपि समानौ एव मन्तव्यौ।

एवं निश्चित्य तौ नदीम् अविशताम्। रामाधीनस्तु 'श्रीरामस्य जयोऽस्तु' इति प्रोच्चैः उच्चार्य झटित्येव नदीं तीर्त्वा क्षणेनैव तस्याः परं तीरम् अवाप्नोत्। यवनस्तु किञ्चिद् दूरं जानुदघ्ने जले गत्वा मनसि संदिहानः विचारितवान्। अहो! नूनम् अस्य राम एव महान् यस्य नामोच्चारणमात्रेणायं मत्-त्रुवो नदीम् उत्तीर्य पारम् अगच्छत्। मम तु खुदायां सन्देहः वर्तते। यदि मम रक्षार्थं स सप्तमात् आकाशात् न अवतरेत् विलम्बं वा कुर्यात्, तर्हि अहं तु नूनं मज्जितो भविष्यामि।

तथापि एवं करोमि, रामस्तु प्रत्यक्षं तारयति, स तु महान् एव इति नात्र संदेहलेशोऽपि। खुदा खलु मम पूज्या देवता, अतः प्रथमं प्रोच्चैः खुदायाः नामानि उच्चार्य, पुनः मनसि रामं स्मरामि। अवश्यं द्वयोः एकतरः मम रक्षां करिष्यतीति मन्ये।

एवं कृतनिश्चयः सः यवनः उच्चैः स्वरेण 'खुदा विजयताम्' इत्युवाच। ततश्च मनसि बहुवारं रामस्य स्मरणं कृतवान्। पुनश्च कानिचित् पुरतः पदानि धृत्वा संशयात्मा व्यचिन्तयत्—'अहो रामः खलु हिन्दूनां देवः, कदाचित् स मम रक्षां न कुर्यात्। एवं न रामे नापि च खुदायां तस्य सुदृढः विश्वासः बभूव। एतस्मिन्नन्तरे संदेहपरम्परापरीतं तं नदीवेगः सुदूरमवाहयत्। रामाधीनस्तु नद्याः परे पारे सुचिरं तस्य प्रतीक्षां कृत्वा तं तत्र निमग्नं मत्वा रामस्य नामानि जपन् हरिद्वारपथं जगाम।

छात्राः सदैव यूयम् ईश्वरे दृढं विश्वासं रक्षत। यस्य देवे गुरौ तीर्थे भेषजे वा सुदृढः विश्वासः, [redacted] निःसंदेहं तस्य फलं लभते। यस्तु तत्र संदेहं करोति स तु विनाशं लभते। यथोच्यते—

नूनं फलति विश्वासः संशयात्मा प्रणश्यति।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी॥

---

# आलस्यं देहिनां रिपुः



कोऽपि जातिस्मर उष्ट्र आसीत्। स अलसोऽभवत्। बाल्ये एव तस्य पितरौ मृतौ। मन्दः सः गृहश्रमाद् भीतः वनमगच्छत्। स तत्र नित्यं स्नायी शुष्कपत्रभोजनः मन्थरया गत्या तपश्चरितुमारभत। स बहुविधैः व्रतैः नियमैः तीर्थस्नानैश्च पूर्वजन्मकृतानां पापानां प्रायश्चित्तमकरोत्। तपसा प्रसन्नः विश्वसृट् प्रादुर्भूय 'वरं ब्रूहि' इति तमामन्त्रयत्।

महानलसः स उष्ट्र आहारान्वेषणे इतस्ततः परिभ्रमणश्रमं न सहमानः—'देहि मे भगवन्! शतयोजनलम्बां शिरोधराम्, यथाहमेकत्र व तिष्ठन् दूरस्थितानि अपि तृणानि चरितुं समर्थः स्याम्, रक्षेयं चात्मानमाहारान्वेषणश्रमात्, इति वरं याचते स्म। विधाताऽपि 'तथास्तु' इत्युक्त्वा सुरपुरमगच्छत्।

उष्ट्रस्य ग्रीवा शतयोजनलम्बाऽभवत्। स एकस्मिन्नेव स्थले तिष्ठन् सुदूरस्थितानपि घासान् चरितुं प्राभवत्।

एकदा स महादीर्घां स्वस्य शिरोधरां लम्बायमानः मन्दं मन्दं विविधानि तृणानि स्वदमानः, सुखेन संचरमाणोऽभवत्। अस्मिन्नन्तरे झञ्झावातः समागतः वृष्टिश्च प्रारभत। तदा शीतवातवर्षेभ्यः बाधितः स उष्ट्रः लम्बां स्वस्य ग्रीवां

पर्वतस्य कन्दरायां प्रवेष्टुं प्रयतते स्म, परन्तु सुदीर्घां स्वस्य कन्धरां रक्षितुं नाशक्नोत् ।

अस्मिन्नेवान्तरे शीतवातवर्षेभ्यः परिश्रान्तौ कौचित् शृगालदम्पती शरणार्थिनौ तत्र कन्दरामुखं सम्प्राप्तौ । बुभुक्षितौ तौ क्रमेलकस्य मांसलां कन्धरां वीक्ष्य सञ्जातहर्षौ अभवताम्, प्रारभेतां च तां विदीर्य मांसमत्तुम् । पीडया स उष्ट्रः कन्धरामितस्ततोऽचालयत् । स ग्रीवां कन्दरामुखात् निःसारयितुं प्रायतत, परन्तु बहुदीर्घतया तथाकर्त्तुं सफलो नाभवत् । शृगालदम्पती यथेच्छं तस्य मांसं भुक्त्वा तृप्तौ अभवताम्, उष्ट्रश्च पीडया पञ्चत्वमगच्छत् ।

इत्थं च लोकेऽलसानां प्राणहानयः उपतिष्ठन्ति । अतो न कदापि पुरुषेण अलसेन भवितव्यम् । आलस्यं हि परमः शत्रुः देहवताम्, तद् दूरादेव परित्याज्यम् । इदमत्र युज्यते भणितुम् :—

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति ॥



# अस्माकं प्रकाशनानि

| | | एकस्य प्रतेः मूल्यम् रु०न.पै. |
|---|---|---|
| संस्कृतव्याहारः | भागाः १—५ | ०.७५ |
| सप्त विभक्तयः | | ०.७५ |
| पञ्च सन्धयः | | ०.७५ |
| संस्कृतप्रवेशिका | भागाः १—३ | ०.७५ |
| बालनीतिकथाः | भागाः १—८ | ०.६३ |
| संस्कृतसोपानम् | भागाः १—३ | १.२५ |
| प्रहेलिकाशतकम् | | ०.५० |
| समासाः | | ०.५० |
| संभाषा | भागाः १—५ | ०.६२ |
| संभाषा English | भागाः १—५ | ०.६२ |
| लौकिकन्यायरत्नमञ्जूषा | | २.२५ |
| संस्कृतप्रबन्धचन्द्रिका | भागाः १—३ | १.२५ |
| सुन्दरं संस्कृतम् | भागाः १—३ | ०.७५ |
| भारतीयाः महापुरुषाः | | १.२५ |
| कुमारसंभवम् | (संक्षिप्तगद्यम्) | ०.७५ |
| रघुवंशम् | (संक्षिप्तगद्यम्) | ०.७५ |
| बालरामायणम् | | ०.७५ |
| लघुनिबन्धावली | | १.०० |
| संस्कृतवर्णमाला | | १.०० |
| कृदन्ताः | | ०.५० |
| शालेयसुभाषितानि | | ०.६२ |

प्राप्ति स्थानम्—

बालसंस्कृतकार्यालयः
आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा—
८०, कोटला रोड, नई दिल्ली-१

# कथानां क्रमः






द्वितीयं मुद्रणम् ] [ १ मई खिष्टाब्दाः १६६२

प्रकाशकः—

वैद्यः–रामस्वरूपशास्त्री

बालसंस्कृतं कार्यालयः, आगरा रोड, घाटकोपर, बम्बई-७७

मुद्रकः—

सार्वदेशिकप्रेस, दरियागंज, दिल्ली-७

# बालनीतिकथाः

द्वितीयो भागः

## पिपासुः पान्थः

कश्चित् पान्थः सुदूरं यात्रां कुर्वन् श्रान्तः आसीत्। ग्रीष्मे ऋतौ मध्यंदिने पिपासाकुलः स एकस्य नारिकेलस्य तरोः तलम् अगच्छत्। न स तत्र जलम् अवालोकयत्। 'पिपासया मरिष्यामि' इति नितान्तं व्याकुलः स यावद् वृक्षे दृष्टिम् अकरोत्, तावत् स तत्र बृहन्ति नारिकेलफलानि लम्बमानानि अपश्यत्। स अचिन्तयत्--'यदि वृक्षाद् अस्माद् एकं फलम् अपतिष्यत्, मम तृष्णा शान्ता अभविष्यत्, कथं नु महोत्तुङ्गात् वृक्षात् फलं लभेय' इति स क्षणं चिन्तापरः अभवत्। ततः स वानरमेकं वृक्षस्य शिखरे स्थितम् अवालोकयत्। उपायज्ञः स कपेः अनुकरणस्वभावं ज्ञात्वा झटिति समीपस्थात् कृष्टक्षेत्रात् कानिचिद् लोष्टानि आदाय तस्य वानरस्य उपरि प्राक्षिपत्। अनुकरणपटुः वानरस्तु नान्यत् प्रक्षेप्यं लब्ध्वा नारिकेल-फलान्येव तं प्रति प्राक्षिपत्। शीघ्रं स नरः नारिकेलफलं भंक्त्वा जलं च पीत्वा तृप्तः अभवत्।

इत्थं बुद्धिमान् स पान्थः स्वस्य प्राणरक्षाम् अकरोत्। अत उच्यते —

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
बुद्धिमन्तो न सीदन्ति जलार्थी पथिको यथा॥

# कर्त्तव्यो नातिसंचयः

आसीत् कल्याणकटके भैरवः नाम कश्चिद् व्याधः। स एकदा मृगयां गतः वनाद् वनम् पर्यटन्, मृगान्, वराहान्, महिषान्, शार्दूलान्, शृगालान्, शशान् च अन्विष्यन् क्षुत्पिपासाभ्याम् अर्दितः यावद् एकस्य वटवृक्षस्य छायायाम् उपविशति, तावद् एकं भारमृङ्गम् अपश्यत्। तत्क्षणाद् एव स शरं धनुषि निधाय तं मृगम् अविध्यत्।

ततः मृगम् आदाय गच्छन् स घोराकृतिं शूकरमेकम् अपश्यत्। शूकरः अपि घनघोरां गर्जनां कृत्वा तम् अभ्यक्रामत्। तस्य तीक्ष्णदन्तप्रहारेण मुष्कदेशे हतः स व्याधः संछिन्नद्रुमः इव भूमौ अपतत्, पञ्चतां च अगच्छत्।

एतस्मिन् एव अन्तरे दीर्घरावः नाम जम्बुकः आहारार्थी परिभ्रमन्, मृतान् तान् मृगव्याधशूकरान् अपश्यत्, अचिन्तयच्च 'अहो अद्य मे महद् भोजनम् उपस्थितम्।' साधूच्यते—

अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम्।
सुखान्यपि तथा दैवात् समायान्ति शरीरिणाम्॥

तद् अस्तु, अधुना प्रथमबुभुक्षायां निस्वादु धनुःकाण्ड-लग्नं स्नायुबन्धनं खादामि, इत्युक्त्वा यावत् स तद् भक्षयितुम् आरभत, तावत् स्नायुबन्धनं छिन्नम्, धनुःकोटिः च उत्पतित्वा

तस्य उदरे प्राविशत्, तेन हृदि निर्भिन्नः स दीर्घरावः पञ्चत्वम् अगच्छत्। अत उच्यते–

कर्त्तव्यः संचयो नित्यं कर्त्तव्यो नातिसंचयः।
पश्य संचयशीलोऽसौ धनुषा जम्बुको हतः॥

## बुद्धिहीना विषीदन्ति

एकस्मिन् पिप्पलवृक्षस्य कोटरे चामरिकैः धान्यसंग्रहः कृतः आसीत्। समीपेन गच्छतः एकस्य वानरस्य तस्मिन् दृष्टिः अपतत्। लोलुपः घस्मरः स कोटरे स्वस्य करौ प्रवेश्य एकपदे एव बद्धमुष्टिभ्यां हस्ताभ्यां तां धान्यराशिं बहिः आनीय निगिलितुम् ऐच्छत्। तस्य कोटरस्य मुखं संवृतं स्वल्पं च अभवत्, इति हेतोः कृतबहुप्रयत्नः अपि स मूर्खः वानरः ततः धान्यं लब्धुं न प्राभवत्। स वारं वारं कोटरे हस्तौ प्रावेशयत्, निरकाशयत्, अभजच्च परमं वैकल्यम्।

वानरः सुबुद्धिः न आसीत्। यदा यदा स मूर्खः कोटरे हस्तौ प्राक्षिपत्, तदा तदा एव गृध्नुः स उभयोः स्वस्य हस्तयोः सहसा एव मुष्टी अबध्नात्। उभाभ्यां हस्ताभ्यां कोटरान्तराले स वृक्षेण धृत इव, पिशाचेन गृहीत इव, पाशेन बद्ध इव, शृंखलाभिः निगडित इव, किंकर्त्तव्यविमूढः चीत्कारम् अकरोत्, अक्रुदत्, दन्तान् अचर्वत्, अमूत्रयत्, अरुदत्, बलाद् हस्तौ आकर्षन् रक्तारक्तम् आत्मानम् अकार्षीत्।

ततः चिरं कूर्दतः नृत्यतः चीत्कुर्वतः श्रान्तस्य च दैवाद् विसृष्टमुष्टी तस्य हस्तौ कोटराद् बहिः आयाताम्। स तु मृत्युना मुक्त इव, पश्चाद् अपश्यन्नेव महता जवेन दूरम् पलायत। ततः आरभ्य भीतः स न तस्य वृक्षस्य छायाम् अपि श्रयति स्म। एवं निर्बुद्धयः जनाः अपि निरर्थकं पीडाः सहन्ते। यथोच्यते–

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
बुद्धिहीना विषीदन्ति बद्धमुष्टिः कपिर्यथा॥

## परोपकाराय सतां विभूतयः

एकदा कश्चिन् मालाकारः स्वस्य क्षेत्रे अभिनवान् आम्रपादपान् आरोपयमाणः आसीत्। स महता परिश्रमेण कार्यव्यापृतोऽभवत्। एतस्मिन् एवान्तरे तुरगपृष्ठमारूढः मृगयार्थी तस्य प्रदेशस्य राजा तेन एव मार्गेण प्रातिष्ठत्। स वृद्धं मालाकारं तथाविधे कष्टसाध्ये कर्मणि संलग्नमपश्यत्। स तुरगं स्थापयित्वा वृद्धं समाहूय विस्मयाकुलः पर्यपृच्छत्–

किं ते वयः क्व सामर्थ्यं कुटुम्बभरणं कियत्।
किं ते मनः कियच्छेषः आयुषः किं श्रमे फलम्॥

इति श्रुत्वा स मालाकारः भूमिलग्नजानुः शिरसा प्रणम्य अकथयत्। हे राजन्!

वयोऽशीतिर्न सामर्थ्यं कुटुम्बभरणं च न।
आयुर्नास्ति, मनश्चास्ति; कर्त्तव्यं हि श्रमे फलम्॥

राजा–निष्फलं कर्त्तव्यम्। अस्मिन् वृद्धे वयसि

निरर्थकं श्रमं करोषि। जानासि कियता कालेन इमे वृक्षाः फलिष्यन्ति ?

मालाकारः–दशभिः वर्षैः फलिष्यन्ति इमे वृक्षाः।

राजा–जराजीर्णस्त्वं तथाविधं श्रमं कुर्वाणः शीघ्रं मरिष्यसीति नात्र संदेहः। त्वमेतेषां वृक्षाणां फलानि भोक्तुं न कथमपि जीविष्यसि, कथं तर्हि आत्मानं व्यर्थं परिश्राम्यसि ?

मालाकारः—महाराज ! पश्यतु भवान्, य एतेऽत्र वृक्षाः सन्ति, ते सर्वेऽपि अन्यैरेव मम पूर्वजैः समारोपिताः सन्ति। अहमेतेषां फलानि खादामि। यथाहमन्यैः समारोपितानामेतेषां फलानि भुञ्जे, तथैव अन्येऽपि मयारोपितानामेतेषां फलानि भोक्ष्यन्ते इति मन्ये।

राजा—आः, उदात्तचरित मालाकार ! धन्योऽसि, वदान्योऽसि, परोपकारपरोऽसि त्वम्। अहं ते प्रसन्नोऽस्मि। गृहाण इमानि शतरूप्यकाणि। इदं तुभ्यं पारितोषिकम्। देशः इदानीं त्वादृशानां परोपकारपराणां भवं वाञ्छति। इत्युक्त्वा नगरं प्रातिष्ठत्।

मालाकारस्तु नृपात् पारितोषिकमादाय तस्मै धन्यवादान् अवादीद्। अचिन्तयच्च–ये आम्रपादपाः समारोपणसमकाले एव रजतफलानि अफलन्, भविष्यति किं किं न फलिष्यन्ति भविकमस्माकमिति। उक्तं च--

परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः।
परोपकाराय स्रवन्ति मेघाः परोपकाराय सतां विभूतयः॥

## जाल्मो वृकः



एकदा निदाघे चण्डांशुतापतप्तः पिपासितः कश्चित् छागपोतः पार्श्ववर्तिन्याः नद्यास्तटमगच्छत्। तत्र स उन्नते प्रदेशे जलं पिबन्तं वृकं दृष्ट्वा निम्ने प्रवाहे जलं पातुं प्रारेभे। वृकस्तं वीक्ष्य—'केनापि प्रकारेण कलहमुत्पाद्याहमेनं भक्षयामि, इति मनसि चकार। ततः स समुपसृत्य गर्जन्नूचे—'आः मूर्ख! घासजीविन् पशो! दिवापि न पश्यसि किम्? अहमत्र जलं पिबामि, त्वं तत्र मलिनयसि पानीयम्। किं न लज्जसे, इदमनुचितं कर्तुम्? अथवा गर्वितोऽसि, यत्पश्यन्नपि न पश्यसि मदान्धस्त्वमुच्चावचम्? किन्निमित्तस्तेऽयमनुचितारम्भः? शीघ्रं मे कथय, नो चेद् हनिष्यामि त्वाम्।'

तदा भीतः सोऽजाशिशुः सविनयमवादीत्—'भोः वृकश्रेष्ठ! यत् त्वं वदसि, तत्तु सर्वथाऽसम्भवमिवाभाति। त्वत्तो यज्जलं वहति, तदहं पिबामि। त्वमुच्चैः स्थाने तिष्ठसि, अहं च निम्ने तिष्ठामि। त्वत्पीतं जलं मामायाति, मत्पीतं तु पूर्वां दिशं प्रयाति। कथं नु मत्पीतं पानीयं त्वां प्रतीपं वहेद्?' इति।

तदा वृको नेत्रे विस्फार्यावादीत्—'आः गोलकस्य पुत्र! अधमस्त्वम्, पापोऽसि। षण्मासात् प्राक् त्वं मामशपः'। ततः स छागशिशुरकथयत्—'हा कष्टम्! कथमस्य तव कथनस्य सम्भवः? यस्य मम जातस्य केवलं मासत्रयमेव व्यतीतम्, सोऽहं कथं नाम षण्मासात् प्राक् त्वामशपम्' इति। ततो वृकः क्रोधावेशेन नेत्रे विस्फार्य दन्तैर्दन्तान् विघट्टयन्, पादाघातैः च भुवं

सन्, तमुपसृत्य तारस्वरेण धर्षयन् प्रोवाच—'दास्याः पुत्र ! यदि त्वं नाभवः, तर्हि स तव पिता भवेत् । पामरा भवन्ति खलु छागाः' । इत्युक्त्वा स वृकः निर्दोषं तमजाशिशुं व्यापाद्या-खादीत् । इदमत्र युज्यते वक्तुम्—

येन केनच्छलेनापि दोषमुत्पाद्य दुर्जनः ।
सज्जनं बाधते क्रूरः परपीडापरायणः ॥



## कलहः कार्यविनाशाय

कदाचिद् द्वौ बिडालौ सखायौ आस्ताम् । तौ सदैव सहचरौ अभवताम् । एकदा नगरे भ्रमन्तौ तौ कस्यचित् श्रेष्ठिनो गृहमविशताम् । तत्र युगपदेव तौ स्थाल्यां रोटिकामेकामपश्यताम् । ततः एकः उपसृत्य तां मुखेन आदाय पलायाञ्चक्रे । द्वितीयोऽपि तमन्वधावत् । इत्थं च धावतोः तयोः एक उवाच—भोः ! मया प्रथमं दृष्टेयं रोटिकेति विपुलं भागमस्याः अर्हाम्यहम् । अन्यस्तु मया समानीतेति विशेषांशमस्याः अर्हामीति उच्चैराक्रोशत् । एवं वदमानयोस्तयोर्मुष्टामुष्टि युद्धं प्रवृत्तम् । तयोः कलहे रोटिकायास्तस्याः खण्डौ अजायेताम् । तौ चैकमेकं भागमाददाते

स्म। भागौ च तौ समानौ नास्ताम्, इति तौ पुनरपि ममायं तवायमिति कलहमकुर्वाताम्। एतस्मिन्नन्तरे कश्चिद् धूर्तो मर्कटः तत्रागच्छत्। स तौ इदमवादीत्—'अहो बिडालौ! अल्पस्य हेतोर्युवां कलहं कुरुतः। अहं युवयोः रोटिकायाः समानौ भागौ विधाय युवाभ्यां दास्यामि कारयिष्यामि च युवयोः कलहस्यान्तम्।'

बिडालौ च तौ नातिचतुरौ आस्ताम्। तौ तस्य धूर्तस्य कपेः मधुराणि वचनानि हितानि अमन्येताम्। ततः स शाखामृगः तयोः न्यायाधीशपदे स्थितः तुलायन्त्रमानयामास। स तुलायाः एकस्मिन् पात्रे गुरु खण्डम्, अन्यस्मिन् च लघु खण्डं निधाय अतोलयत्। पुनश्चासमानयोः तयो रोटिकाखण्डयोः समीकरणार्थम्, एकदा एकस्मात्, अन्यदा चान्यस्मात् पार्श्वात् छित्त्वा छित्त्वा स्वमुखे न्यक्षिपत्। अनेन च क्रमेण स निःशेषप्रायां तां रोटिकामकरोत्। ततस्तौ बिडालौ प्रार्थयेताम्—'अहो महाप्राड्विवाक! देहि कृपया आवाभ्यामिमौ अवशिष्टौ नो रोटिकाभागौ। नेदानीमावां तव न्यायविधिं वाञ्छावः' इति।

तदा स कपिरवादीत्—'हे मूर्खौ बिडालौ! किमर्थं मया एतावान् श्रमः कृतः? किं नार्हामि पारिश्रमिकम्? शिष्टे इमे शकले मम प्राड्वैवाकं शुल्कं स्याताम्।' इत्युक्त्वा स सर्वमवशिष्टं रोटिकाशकलमभक्षयत्। बिडालौ च तौ 'न कलहः कल्याणाय' इति जल्पन्तौ पश्चात्तपन्तौ च स्वगृहमगच्छताम्। इदमत्रोच्यते—

मूढो विवादमर्थेषु यो जातु कुरुते जनः।
पश्चात्तपति सोऽत्यन्तं न च भद्राणि पश्यति॥

# परानुकारो न श्रेयः

कश्चित् गोपालः कस्यचित् पर्वतस्य उपत्यकायामवात्सीत्। स नित्यं तस्य अजा एडका गाश्च अचारयत्। अथ कदाचित् तस्यैव शैलस्य सानुनि पक्षिराजो गरुडो गगनात् अवातरत्। बुभुक्षितः स स्वस्य वक्रनखराभ्यामेकामजां गृहीत्वा पुनरन्तरिक्षं प्रपेदे। समीपे एव वृक्षस्य शाखायां स्थितः कश्चित् वायसः तमपश्यत्। सोपि तं तथा कुर्वन्तमन्वकरोत्। यावत् सः एडकायाः पृष्ठे पपात, तावदेव स तस्याः ऊर्णायां ग्रथितपादो बन्धनं प्राप। बद्धः स उच्चैः स्वरेण व्यरौदीत्। तस्य शब्दं श्रुत्वा सन्निहिते एव क्षेत्रे कार्यं कुर्वाणः क्षेत्रपतिस्तमुपसृत्य जग्राह। स तस्य काकस्य पादयोः रज्जुं बद्ध्वा क्रीडनार्थं बालकेभ्योऽददात्। ये बाला अविचार्यैव परेषामनुकरणं कर्तुं प्रवर्तन्ते, ते काक इव प्रणाशं प्राप्नुवन्तीति कवयः कथयन्ति।

परानुकारं यो याति नासमीक्ष्य निजं बलम्।
अनुभूय स दुःखानि प्रणाशाय प्रकल्पते॥

---

# परपीडा प्रणाशाय

कदाचित् कस्यचिद् राज्ञः उद्यानस्य समीपे कृषाणस्य कस्यापि क्षेत्रमासीत्। उद्याने विविधाः खगा वृक्षेषु कृतकुलाया अवसन्। कृषाणो महता श्रमेण क्षेत्रे कार्यं करोति स्म। यदा

यदा तस्य सस्यानि परिपाकमगच्छन्, तदा तदैव ते उद्यानवासिनः खगाः सर्वमन्नं खादन्ति स्म। एवं खगैः आयासितः स कृषाणः उपायमचिन्तयत्। स तेषां काक-कीर-कपोतादीनां बन्धनाय जालमतनोत्।

दैवात् कश्चित् चिल्लः कपोतमनुधावन् तत्र जालेऽपतत्। ततः स तस्माद् जालाद् आत्मानं मोक्तुं परमेण प्रयत्नेन अयतत। नातिदूरे एव क्षेत्रे कर्मणि प्रसक्तः कृषाणः आसीत्। सोऽभ्युपेत्य तं चिल्लमगृह्णात्, आसीच्च छुरिकया तं हन्तुमुद्यतः। तदा चिल्लः सकरुणं प्रार्थयत्—भोः क्षेत्रपते! प्राणदानं देहि मे। दयस्व मयि, न मया तव कोऽपि अपराधः कृतः। अहं कपोतमनुगच्छन् अस्मिन् पाशेऽपतम्। नाहं कदापि तव क्षेत्रे जायमानमन्नं खादामि। काकाः कीराः कपोताश्च मम भोजनम्। कृपया मुञ्च माम्। कृषक आह—भद्रमुख! यथा त्वया न मम किमपि अपराद्धम्, तथैव शुकैः वायसैः पारावतैश्चापि न ते किमप्यपराद्धम्, तांस्त्वं खादसीति वदन् स छुरिकया तस्य शिरः कायादपातयत्। तत्रैव मार्गे गच्छन् कश्चित् साधुः सर्वमिदं समीक्ष्य परपीडनं पापाय इति ऊर्ध्वबाहुरवादीत्—

अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

---

# न लोकः पारमार्थिकः

आसीत् पुरा चेत्रपुञ्जो नाम ग्रामः। तस्मिन् कपर्दिकादासो नाम श्रेष्ठी अवात्सीत्। स एकदा ग्रामीणजनसंघेन सार्धं गङ्गास्नानार्थं शकटेन प्रयागं प्रस्थितः। मार्गे गच्छतः तस्य कुत्रापि विजने चौरैः शकटं लुण्टितम्। एवं च नष्टबहुधनः स पश्चात्तापं कुर्वन् गृहं प्रत्याजगाम। मित्राणि सम्बन्धिनः प्रतिवेशिनश्च तस्य कुशलं प्रष्टुं समागच्छन्। ते अपृच्छन्-'भो भोः श्रेष्ठिन्! कथं चौरैः लुण्टितं शकटम्? कासन् चौराः? कियन्तोऽभवन् ते? क्व शकटमभूत्? कासीः त्वम्? इत्यादिकम्।

ततः श्रेष्ठी अवादीत्-भोः! किं करोमि। ईश्वरेच्छा बलीयसी। यद् भावि तद् भवत्येव। अवहिता आसन् वयम्। बहवः आसन् वयम्। ते तु स्वल्पा एवाभवन्। अग्रतः आसीत् शकटम्, सुगुप्तमभवत्तत्, तथापि तैः लुण्टितम्। पुण्यं कुर्वतोऽपि भाग्यदोषेण पापाः प्रतिफलन्ति। अस्तु भवितव्यमासीत्। दैवस्य दूषणम्। न दैवं कस्यापि सुखं सहते।

लोकैरुक्तम्-अहो! श्रेष्ठिन्!- तत्तु तवैव मौर्ख्यम्, यत्त्वं शकटमग्रेऽकार्षीः, प्रायश्चौरा अग्रत एवाभिपतन्ति। श्रेष्ठी आह-किं करोमि, एवमेव जातम्।

ततोऽन्यो लोकवृन्दः आगत्य तथैवापृच्छत्। तदा श्रेष्ठिनोक्तम्-'शकटं मध्येऽभवत्, तथापि लुण्टितं तैः' इति। ततो जना ऊचुः-अहो ते महती मूर्खता। को नाम बुद्धिमान् संघ-

यात्रासु शकटं मध्ये करोति ? चौराणां लुण्टाकानां च लक्ष्यं सर्वदा मध्ये एव पतति। ते सदैव केन्द्रमेवाभिमन्ति।

पुनस्तृतीयो लोकवृन्दः आगत्य तथैवापृच्छत्। तदा श्रेष्ठिना प्रोक्तम्–भोः! शकटमस्माकं पश्चादभूत्, तथापि लुण्ठितम्। किं करोमि दैवहतकोऽस्मि। तेऽकथयन्–अहो! ते महामौढ्यम्। को नाम क्षेमकामः शकटं पश्चात् करोति, स्वयं चाग्रतश्चलति। चौराः सदैव रक्षकभयेन पृष्ठभागादेवाक्रमन्ति। स्वयमसावधानः चौरान् दूषयसि त्वम्! ततस्तेषां वचनं श्रुत्वा भृशं रुष्टः श्रेष्ठी प्रोक्तवान्–

दैवादापतिते लोकैर्व्यसने दूष्यते नरः।
गतानुगतिको लोको न लोकः पारमार्थिकः॥

## मूर्ख आभीरः

आसीत् कल्याणपुरं नाम ग्रामः। तस्मिन् दण्डमारो नाम आभीरोऽवसत्। महान् मूर्खोऽभवत् स आभीरः। स एकदा ग्राम्यैः व्यापारिभिः सह देशान्तरं प्रातिष्ठत्। तस्य पुत्रोऽपि द्वादशवार्षिकः तेन सोऽकमगच्छत्। सोऽपि मूर्खः एवासीत्। मार्गे घनमरण्यं समापतत्। मार्गच्युतास्तेऽटव्यां सुदूरं भ्रान्त्वा परिश्रान्ता अभवन्। तदा ते सर्वे मार्गातपेन तप्ताः कस्यचिन्महावटवृक्षस्य शीतलच्छायं तलं समुपाविशन्। दण्डमारस्य पुत्रस्तु पन्थानं विहाय एकाकी एव सुदूरं पर्याटत्। ततः स फलानि खादद्भिः वन्यैः मर्कटैः समागच्छत्। वानरास्ते

तं तीव्रैः स्वैः नखैः अपाटयन्। सोऽपि येन केन प्रकारेण तेभ्यः आत्मानं विमोच्य रुधिरेण स्नातः सत्वरं स्वपितरं समेत्य। "अहं कैश्चित् फलभक्षणतत्परैः लोमशैर्जन्तुभिः निर्दयं छिन्नः। आततायिनस्तेऽवश्यं दण्डनीया भवता" इत्याह।

इति श्रुत्वा स आभीरः खड्गमादाय पुत्रदर्शितेन मार्गेण वनं प्राविशत्। स तत्र आत्मनः पुत्रस्य घातुकान् जन्तून् अमार्गयत्। तदा स एकस्य महातरोः तले निषण्णान् तपोधनान् साधून् अपश्यत्। जटाधराः हरिणाजिनपरिधानास्ते फलाहारं कुर्वाणाः आसन्। तान् वीक्ष्य सोऽचिन्तयत्–'अहो एतैरेव लम्बलोमधारिभिः फलाहारपरैः मम पुत्रः आयामितः। अत एतान् सर्वान् अनेन तीक्ष्णधारेण खड्गेन मारयित्वा निर्यातवैरो भवामि।'

इत्थं प्रजल्पन्तं तं कश्चित् पथिकः आगत्य उवाच–'अरे मूर्ख! किमर्थमन्याय्यं कर्त्तुमुद्यतोऽसि। एते खलु मुनयः सन्ति। इमे तपश्चरन्ति। नैते कमपि पीडयन्ति। एते दयालवः साधवः सन्ति। तव पुत्रस्तु वन्यैः वानरैः पीडितः, अतस्त्वया विचार्य एव नाकार्ये प्रवर्तितव्यम्।'

इत्थं तस्य पथिकस्य वचनैः विज्ञाततथ्यः स आभीरः आत्मनो मौर्ख्येण लज्जमानः पुत्रस्य मौढ्यं च विनिन्दन् इमं श्लोकमपाठीत्–

उच्चावचेषु कार्येषु योऽविचार्य प्रवर्तते।
लज्जते स भृशं पापः पश्चात्तापं करोति च॥

# परद्रव्येषु लोष्ठवत्

रङ्को वङ्का च दम्पती आस्ताम्। तौ कृषिं कृत्वा जीविकाम् उपार्जताम्। विन्ध्यस्य उपत्यकायां तयोः कुटीरमासीत्। तौ परमेश्वरस्य परमौ भक्तौ सर्वथा विगतस्पृहौ भगवतः स्मरणभजनपूजनपरायणौ चाभवताम्। 'भगवान् भक्तानां परीक्षां करोतीति' साधीयसी जनश्रुतिः। एकदा भगवान् तयोः परीक्षां कर्तुमैच्छत्।

एकस्मिन् दिने तौ इन्धनमानेतुं वनमार्गेण गच्छन्तौ अभूताम्। पुरतः पतिरगच्छत् पत्नी च नातिदूरेण अन्तरेण तमन्वसरत्। वने पादपद्धतिं गच्छतो महात्मनो रङ्कस्य पादौ भूमौ निखातस्य घटस्य मुखे अपतत्। संजातस्खलनः स पादतले सुवर्णदीनारैः पूरितं राजतं कलशमपश्यत्। स्वर्णनिधिं तं दृष्ट्वाऽपि स मनस्वी चरणाभ्यां धूलिना समाच्छाद्य सत्वरं मार्गमलंघयत्। एतस्मिन्नन्तरे वङ्कादेवी अपि पतिमनुगच्छन्ती तमेव देशं समागच्छत्। पतिः किं करोतीति पश्यन्ती सा मनस्विनी प्राह-'किं करोति भवान् अत्र मार्गे पादाभ्यां रजोनिचयेन' इति। भामिन्याः प्रश्नं श्रुत्वा रङ्कः पतिः प्रथमं तु मौनमेवावलम्बत, ततश्च पत्न्याः आग्रहेण रहस्यं समुद्घाटयन्नाह-'देवि! स्वर्णदीनारैः पूरितं रजतकलशमिदम्। इमां धनराशिं दृष्ट्वा जातु तव मनो लोभाकृष्टं भवेद् इति सञ्चिन्त्य मयायं धनराशिः रजसा समाच्छाद्यते।'

इति श्रुत्वा वङ्कादेवी अवादीत्—'अहो! किमत्र धूलौ धूलिप्रक्षेपेण, वर्तते एवावयोः परद्रव्येषु लोष्ठवद् भावः।' ततस्तौ स्वगृहं गच्छन्तौ इमं श्लोकमपठताम्—

मातृवत् परदारेषु परद्रव्येषु लोष्ठवत्।
आत्मवत् सर्वभूतेषु यः पश्यति स पश्यति ॥

## मूढो भृत्यः

अस्ति पाटलीपुत्रं नाम नगरम्। तस्मिन् पाषाणबुद्धिः नाम कृपणशिरोमणिः श्रेष्ठी वसति स्म। तस्य बहूनि धनानि गृहाणि, अनेके पशवश्चासन्। विक्रीतबुद्धिर्नाम तस्य मूर्खाग्रगण्यो भृत्योऽभवत्। प्रायः सोऽनर्थे कुमार्गेषु च प्रवर्तते स्म।

एकदा पाषाणबुद्धेस्तस्य श्वशुरालये महान् उत्सवः आसीत्। तस्य श्वशुरः सत्यनारायणस्य भगवतः कथां कारयामास। तस्मिन् उत्सवे तस्य बान्धवाः सुहृदः भ्रातरः सम्बन्धिनः स्वसारो दुहितरश्च समागच्छन्। अन्येऽपि परिचिताः पूज्याः पुरोहिताश्च ग्रामान्तरेभ्यः समागच्छन्। पाषाणबुद्धेः भार्या अपि परिकरेण सार्कं पितुर्गृहमगच्छत्। सर्वे महोत्सवस्य सुखमन्वभवन्।

सप्ताहे व्यतीते स धनपतिः भार्यायाः आनयनाय स्वभृत्यं विक्रीतबुद्धिं श्वशुरगृहं प्राहिणोत्। मूर्खतमोऽस्ति मे भृत्य इति तु प्रागेव स्वामी जानाति स्म। अतः प्रस्थानसमये एव स तं प्रबो-

थयामास । स तमकथयत्–'भोः विक्रीतबुद्धे ! मम श्वशुर-गृहं गतेन त्वया परमेण गम्भीरेण भाव्यम् । तत्र त्वया पञ्चोच्चानि पञ्च नीचानि, तीक्ष्णानि सरलानि च वचांसि वाच्यानि इति ।

ततः स स्वामिनः श्वशुरालयमगच्छत् । तत्र सम्प्राप्तं तं श्रेष्ठिनः सम्बन्धिनोऽनामयमपृच्छन् । स स्वामिनः शिक्षां स्मारं स्मारं प्रथमम्-'पर्वतः, पर्वतः,' ततश्च 'खातं खातम्' इत्यवादीत् । पुनश्च दात्रं दात्रम्, वंशो वंशः इत्याक्रोशत् । ततश्च स प्राङ्गणे स्थितां प्रोत्तुङ्गां कोष्ठिकां विलोक्य तां समारोहत् । ततश्चाधो गर्तिकां विलोक्य उपरिष्टात् अपतत् । ततः सर्वैः कारणं पृष्टोऽपि स न किञ्चिदवादीत् । ततस्तैरनुमानेन विचारितम्–'अहो ! पुत्रीपतिः वंशं छेत्तुं क्वापि वने पर्वतमारुह्य तं छिन्दन् स्खलितपादः कुत्रापि गर्ते पतित्वा पञ्चत्वमगच्छद्' इति । अयं शिष्टः पुनः पुनः पृष्टोऽपि गम्भीरत्वेन न स्पष्टं कथयति दुर्वृत्तम् । तथापि स मूर्खो भृत्यः औदासीन्यमेवादर्शयत् मौनी । तं तथाभूतं वीक्ष्य सर्वेऽपि ते रोदितुं लग्नाः, विलेपुश्च–हा दैव ! हा विधे ! किं कृतं त्वया पापिष्ठेन ! इयं वराकी अजातपुत्रैवास्माकं दुहिता विधवा विहिता । ततश्च तान् रुदतो विलोक्य सोऽपि विक्रीतबुद्धिरुच्चै रोदीत् ।

अन्यस्मिन् प्रभाते स स्वामिनीमनादाय एक एव स्वामिनो गृहमयासीत् । एकाकिनं सम्प्राप्तं तं स्वामी अपायशङ्कितः

पर्यपृच्छत्—'किं भोः! किमर्थं नानीता त्वया भगिनी? इति।' ततः स विलप्यारोदीत् अकथयच्च—'किं कथयामि स्वामिन्! विधातुः मौर्ख्यम्। अपुत्रिणी एव भगिनी तेन विधवा कृता।' इति श्रुत्वा श्रेष्ठी अपि रोदितुं लग्नः। तस्य रोदनं श्रुत्वा प्रातिवेशिका जनाः समागच्छन्, अपृच्छंश्च रोदनस्य हेतुम्। ततः सोऽवादीत्—'अरे लुण्ठितोऽहं दुष्टेन दैवहतकेन। मम भगिनी वराकी विधवा कृता। ततो लोका अवदन्—'भो! मूर्ख! त्वयि जीवति कथं तव भार्या विधवा जाता? नहि जीवति पत्यौ जातु नार्यो विधवा भवन्ति।' ततः सोऽवदत्—'अहमत्र विशेषं न जानामि, एष मम भृत्यो मे श्वशुरगृहात् वृत्तमादाय आयाति। अयमेव चेत्थं कथयति, अहमस्य विश्वासं करोमि, नायं कदापि असत्यं भाषते।

एवं ब्रुवाणं तं लोकाः शपथैः दृष्टान्तैश्च सान्त्वनामगमयन्। कवयश्चैवं ब्रुवते—

मूर्खेण विहितं कार्यमुपहासाय जायते।<br>
भृत्यस्य स्वामिनीं नेतुं गतस्यात्र निदर्शनम्॥

---

# न दुर्जनः साधुदशामुपैति

आसीद् विन्ध्याटव्यां कश्चिद् वृकः। स नित्यं शशशृगालवराहशावकान् व्यापाद्य अखादत्। एकदा मांसं भक्षयतः तस्य गलनलिकायां तिर्यगस्थि निरुद्धम्। तेनातिमात्रं पीडितः स उच्चैः आक्रोशं कुर्वन् सुदूरं पर्याटत्। यः कोऽपि मार्गे मिलितः स एव तेन तदस्थि निष्कासयितुं प्रार्थितः। स बहून् मृगान् वानरान् चापि स्वस्य प्राणरक्षां कर्त्तुं याचयाञ्चकार। न कोऽपि तस्य साहाय्यमकरोत्। ते ऊचुः–

नखिनां शस्त्रपाणीनां दंष्ट्रिणां शृङ्गिणां तथा।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च॥

तदा स उपायं चिन्तयांचकार। स एकस्य क्षेत्रस्य तीरम् अतिष्ठत्, अवदच्चैवम्–'भोः भोः पशवः! यो मम प्राणरक्षार्थं गले निरुद्धमस्थि निष्कासयित्वा साहाय्यं करिष्यति अहं तस्मै तां रत्नमालां दास्यामि या मम गुहायां बहोः कालात् सुरक्षिता वर्तते' इति।

इत्थं च तस्य घोषणां श्रुत्वा कश्चित् सारसः तमागत्योचे–भद्र! अहं तव गले निरुद्धमस्थि निष्कासयिष्यामि, यदि त्वं मां तया रत्नमालया विभूषयेरिति। तदा स सारसोऽभयशपथं कारयित्वा वृकस्य गले स्वां लम्बां ग्रीवां निवेश्यास्थिशकलं निष्कासयांचकार। ततः पारितोषिकं याचमानं

सारसं क्रोधरागरक्तनेत्रो वृकोऽवदत्-'कथं रे मूर्ख ! मत्तोऽपि पारितोषिकं कामयसे ? त्वं ग्रीवां मम गलेऽकरोः, मया च न सा चर्विता, एतदेव किं न पारितोषिकं बहुमन्यसे । इति वृकस्य वचनं श्रुत्वा सारसस्तूष्णीं ततो बहिर्जगाम, उवाच चेदम्-

न दुर्जनः साधुदशामुपैति बहुप्रकारैरपि सेव्यमानः ।
सिक्तोऽपि नित्यं मधुशर्कराभिः न निम्बवृक्षः कटुतां जहाति ॥

## स्वभावो दुरतिक्रमः

कस्मिंश्चिद् वने करालमुखो नाम व्याघ्रः आसीत् । वने स नित्यं बहून् शशशृगालसारमेयान् व्यापाद्य अभक्षयत् । एकदा आखेटिनस्तं पञ्जरेऽबध्नन् । ते तत्पञ्जरमरण्यमार्गोपान्ते मुक्त्वा गृहमगच्छन् । ततः स व्याघ्रस्तस्मात् पञ्जरात् निर्यातुं बहून् प्रयत्नान् अकरोत्, परन्तु सुदृढं तत्पञ्जरं स भंक्तुं नाशक्नोत् । तदा स समीपवर्तिना मार्गेण प्रयान्तं कमपि ब्राह्मणमपश्यत् । स तं प्रार्थयत्—भो भूदेव ! अहमत्र मृत्युमुखे पतितोऽस्मि । कृपया द्वारमुद्घाट्य मामुद्धर, भवान धर्मज्ञः सज्जनश्च, सदा परहितं कुर्वन्ति भवादृशाः ।

उपकर्तुं प्रियं कर्तुं कर्तुं स्नेहमकृत्रिमम् ।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥

इति श्रुत्वा ब्राह्मणोऽवदत् । नाहं तवोद्धारे सम्मतः, यतस्त्वं हिंसकोऽसि । क्रूरस्य कारावास एव उचितः । यदि त्वां मोचयामि, न जाने त्वं मामेव हन्याः इति । कथं मारात्मके त्वयि विश्वासः ।

नखिनां शस्त्रपाणीनां शृङ्गिणां दंष्ट्रिणां तथा ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥

इति श्रुत्वा व्याघ्रोऽब्रवीत्—इदानीमहं कृतप्रायश्चित्तोऽस्मि । भुक्तं मया दुश्चरितानां फलम् । संप्रति भवतो दर्शनेन सर्वाणि मे दुष्कृतानि नष्टानि । नातः परं कमपि जीवं हनिष्यामि । तीर्थभूताद् भवतो वैष्णवदीक्षां गृहीत्वा तपः आचरिष्यामि । येनान्यजन्मनि हिंसकयोनौ मे जन्म न स्यात् ।

इत्थं व्याघ्रस्य मधुराणि वचनानि श्रुत्वा ब्राह्मणोऽवादीत्—सत्यं पश्चात्तापेन दग्धानि ते पापानि, अन्यथा कथमेतादृशो धार्मिको विचारोदयः सम्भवेत् । इत्युक्त्वा ब्राह्मणः पञ्जरद्वारमुद्घाट्य व्याघ्रं मोचयामास । बन्धनान्मुक्तो बुभुक्षितो व्याघ्रः समीपे किमपि भक्ष्यं न लब्ध्वा तं ब्राह्मणमेव भोक्तुं चकमे । तदा भयभीतो ब्राह्मणोऽवदत्—अरे कृतघ्न ! मामेव तवोपकारिणं हंसि । क्व गतं ते धर्मज्ञानम् ? तदा व्याघ्रोऽवादीत्—क्षुधातुरो न धर्मं पश्यति । बुभुक्षितं न प्रतिभाति किंचित् ।

ब्राह्मणः—हा दैव ! व्यर्थं मया हिंसात्मकेऽस्मिन् पशौ विश्वासः कृतः । निःसंदेहं मां हनिष्यति क्रूरोऽयम्, इति यावद

स चिन्तयति तावत् कश्चित् शृगालः आगत्य 'अहो ! कः कलहो युवयोः ?' इत्यपृच्छत्। तदा ब्राह्मण उवाच, श्रूयतां भोः जम्बुकराज ! मयास्य व्याघ्रस्य प्राणाः रक्षिताः, अयं नृशंसः पुनर्मामेव हन्तुमुद्यतः ।

जम्बुकः—किं कथयसि त्वं हे ब्राह्मण ! कथं नाम मानुषस्त्वं बलवन्तं नरभक्षकं व्याघ्रं त्रातुमलम् ? न मे तव वचने विश्वासः ।

ब्राह्मणः—यदि मम वचने तव विश्वासो नास्ति तर्हि व्याघ्रमेव पृच्छ, स एव कथयिष्यति सर्वं वृत्तान्तम् ।

जम्बुकः—कथं भोः महाराज ! भवान् पञ्जरे आसीदिति कथयति ब्राह्मणोऽयम् ।

व्याघ्रः—स सत्यं कथयति । अहं पञ्जरे आसम्, स मां पञ्जरबन्धाद् अमोचयत् ।

क्षमस्व देव ! अहमस्मि मन्दबुद्धिः शृगालः, नावगन्तुं पारयामि युवयोः कलहमूलम् । कथंकारं भवादृशो मृगराजोऽस्मिन् प्राविशत्, कथं चैष वृद्धो ब्राह्मणः प्रभवन्तं भवन्तं रक्षेदिति ।

तदा व्याघ्रः पञ्जरे प्रविश्य साकूतमवादीत्—पश्य रे जम्बुक ! एषोऽहं पञ्जरे प्रविष्टः । पिनद्धद्वारमासीत् तदा पञ्जरमिदम् ।

ततः पञ्जरे प्रविष्टे व्याघ्रे जम्बुकः तस्य द्वारं पिधाय ब्राह्मण मुवाच—'अत्रैव तिष्ठतु पिनद्धः एष शठः । कृतघ्नस्वभावस्य दण्ड एवोचितः । न मारात्मकानां कदापि विश्वासः कर्त्तव्यः 'शठे शाठ्यं समाचरेत्' इत्युक्त्वा तौ स्वां स्वामभिमतां दिश-

मगच्छताम्। कस्यापि दुःस्वभावः परिवर्तितुं न शक्यते। यथोच्यते—

व्याघ्रः सेवति काननं सुगहनं सिंहो गुहां सेवते,
हंसः सेवति पद्मिनीं कुसुमितां गृध्रः श्मशानस्थलीम्।
साधुः सेवति साधुमेव सततं नीचोऽपि नीचं जनं
या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते॥

## चत्वारः प्रश्नाः

पुरा पाण्डवाः कौरवेभ्यो द्यूते पराजिता अरण्येषु पर्यटन्। एकदा मृगयापरायणास्ते सुदूरं वनमरण्यमविशन्। तत्र परिश्रान्तास्ते पिपासाकुला अभूवन्। ततस्ते कस्यचिद् वृक्षस्य छायायामुपाविशन्। तदा युधिष्ठिरः सहदेवमवोचत्–'वत्स! त्वरितो गत्वा पुरो वर्तमानात् सरसो जलं पिब, मदर्थे च समानय' इति। ज्येष्ठस्य भ्रातुराज्ञया त्वरितं गतः सहदेवः यावत् जलं पातुं सरः अविशत्, तावदेव बकरूपधरो धर्मस्तं सम्बोध्य अवादीत्—भो जलार्थिन्! नास्मात् सरसो ममादेशं विना जलं पीयते, देवराजेन इन्द्रेण कारितमिदं सरः, अहं चास्य रक्षार्थं बकरूपधरो यत्नो नियुक्तोऽस्मि। 'अस्य जलं पातुमिच्छुर्मम चतुर्णां प्रश्नानामुत्तरं दत्त्वैव जलं पिबेत्।' इमं नियममुल्लङ्घ्य योऽस्मात् सरसो जलं पिबति, स तत्क्षणादेव मृत्युमवाप्नोति।

इमे च मे प्रश्नाः–

का वार्ता च किमाश्चर्यं कः पन्थाः कश्च मोदते ।
इति मे चतुरः प्रश्नान् पूरयित्वा जलं पिब ॥

पिपासाव्याकुलः सहदेवस्तु तस्य वचनमवज्ञाय यावज्जलं पपौ, तावन्मृतो भूमौ पपात ।

चत्वारो भ्रातरो वने तत्र वृक्षस्य छायायामतिष्ठन् । सहदेवो गतासुः सरसस्तटमशेत । तस्यागमने विलम्बं वीक्ष्य युधिष्ठिरो नकुलमुवाच–'वत्स नकुल ! पश्य किमर्थं तवानुजो विलम्बं करोतीति ?' सोऽपि पिपासाकुलस्तत्र गत्वा यावज्जलम् अस्पृशत्, तावत् तेन यक्षेण निषिद्धः । तथापि सः पिपासार्दितः जलम् अपिबत्, अपतत् च मृतः सरसस्तटे ।

ततो नकुलमपि अनागतं वीक्ष्य युधिष्ठिरो भीमसेनं प्राहिणोत् । भीमोऽपि तथैव तं यक्षमवज्ञाय जलमपिबत्, औज्झत् च प्राणान् । पश्चाद् अर्जुनस्तज्जलाशयम् अयासीत्, सोऽपि तथैव तत्र मूर्च्छितोऽपतत् । यदा गतेषु तेषु चतुर्षु भ्रातृषु न कोऽपि पुनरागच्छत्, तदा संशयितो युधिष्ठिरः स्वयमेव सरसस्तटं प्राप, शुशोच चातिशयं मृतान् वीक्ष्य भ्रातॄन् । तदा बकरूपधरो स यक्षः तस्य पुरतः प्रादुर्भूय तान् प्रश्नान् अप्राक्षीत् । ततो युधिष्ठिरोऽवादीत्–श्रूयतां भोः यक्षराज ! क्रमेण प्रश्नानां तवोत्तरम्–

(१)

मासर्तु दर्वी--परिवर्तनेन
सूर्याग्निना रात्रिदिवेन्धनेन ।
अस्मिन् महामोहमये कटाहे
भूतानि कालः पचतीति वार्ता ॥

(२)

अहन्यहनि भूतानि गच्छन्ति यममन्दिरम् ।
शेषा जीवितुमिच्छन्ति किमाश्चर्यमतः परम् ॥

(३)

वेदा विभिन्नाः स्मृतयोऽपि भिन्ना
नासौ मुनिर्यस्य मतं न भिन्नम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥

(४)

दिवसस्याष्टमे भागे शाकं पचति गेहिनी ।
अनृणी चाप्रवासी च स वारिचर ! मोदते ॥

इत्येवं युधिष्ठिरात् स्वप्रश्नानां उत्तराणि श्रुत्वा यक्षः तुतोष आविर्बभूव च निजेन रूपेण साक्षात् धर्मः । स चतुरोऽपि पाण्डवान् पुनर्जीवितान् कृत्वा पञ्चापि यथेच्छं वरैः छन्दयित्वा ययौ स्वर्लोकम् । इयं च तदाकाशवाणी अभवत्—

अनित्यः खलु संसारः मृत्युशीला हि मानवाः ।
धर्मस्य लक्षणं गूढं संतोषी सुखमेधते ॥

# सर्वमात्मवशं सुखम्



श्यामः नाम छात्रः अस्ति। स विद्यालये पठति। स नित्यं सायं प्रातश्च पर्यटनाय वनं नदीतटं क्षेत्रं वाटीं वा गच्छति। स तत्र बहून् खगान् मृगान् च पश्यति। स एकदा कस्मिंश्चिद् वृक्षे कमपि सुन्दरं शुकं पश्यति। स तं ग्रहीतुं यतते। शुकः वृक्षाद् उत्पतति, आकाशं च गच्छति। तस्य प्रयत्नाः सफला न भवन्ति। स शुकं सम्बोध्य भाषते—हे कीर! विजनं वर्तते वनमिदम्, किमर्थं त्वमत्र एकः निवससि? अत्र हिंसकाः खगाः मृगाश्च सन्ति। किं ते भयं न वर्तते तेभ्यः?

मम गृहं सुन्दरं वर्तते। मम पितरौ दयालू स्तः। कुटुम्बे सर्वे जना दयालवः सन्ति। ममाङ्गणे वाटिका वर्तते। तत्र हरिताः सफलाश्च वृक्षाः सन्ति। तत्र दाडिमानि आम्राणि जम्बूफलानि च सन्ति। तत्र अन्यान्यपि सन्ति पक्वानि फलानि। त्वं मम गृहं चल। अहं ते सौवर्णं पञ्जरं वस्तुं दास्यामि, दाडिमबीजानि चात्तुम्: किन्तु आगच्छसि मे गृहम्?

तदा शुकः—अनुगृहीतोऽस्मि तव मधुरैः वचनैः। परन्तु मम नीडं मे सुखस्य सदनम्। नाहं नीडं विहाय अन्यत्र गन्तुमिच्छामि। अहं वन्यानि फलानि भुक्त्वा, नैर्झरं जलं च पीत्वा सन्तोषेण जीवामि। नाहं तव सौवर्णं पञ्जरं सुन्दरं मन्दिरं वा कामये इति वदति।

श्यामस्तु पुनः-अये कीर ! विचारमूढोऽसि त्वम् । पश्य झञ्झा प्रवर्तते । वनानि नश्यन्ति, मेघा गर्जन्ति, करकाः पतन्ति, जलानि च वर्षन्ति । नीडं ते न दृढम्, कथमिदं त्वां रक्षिष्यति पुराणम् ? इति पृच्छति ।

'हे बाल ! न मे भयं वातवर्षातपेभ्यः । यदा कापि आपद् आयाति, तदा अन्यत्र गच्छामि, स्वतन्त्रोऽस्मि । यथेच्छं खादामि भ्रमामि च स्वैरम् । ईश्वरो दयालुरस्ति । स मम सर्वाणि दुःखानि हरति । मानवाः स्वार्थपराः सन्ति । ते मधुरैर्वचोभिः प्रलोभयित्वा नो वञ्चयन्ति । अहं ते सौवर्णं पञ्जरं जालं मन्ये । नाहं ते रुचिरं पञ्जरम्, दाडिमबीजानि, अन्यानि वा फलानि कामये । इत्युक्त्वा स शुकः आकाशमुत्पतति । ततो गगने ध्वनिः भवति-

वदामि शृणु रे बाल ! लक्षणं सुखदुःखयोः ।<br>
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥

---

## धैर्यं धरति स बुद्धिमान्

---

एकस्मिन् महारण्ये कश्चित् सिंहः आसीत् । वनस्य नातिदूरे एव सरः आसीत् । तस्मिन् सरसि एकः मण्डूकः अवात्सीत् । कदाचित् मृगेन्द्रः जलं पातुं सरसस्तस्य तीरमगच्छत् । जले स्थितस्य तस्य भेकस्य रटनं श्रुत्वा सिंहः भयेन अकम्पत । स

परितः विलोक्य अवादीत्–अहो ! भीषणो ध्वनिः, कुतः अयं समागच्छतीति ज्ञातुं न शक्नोमि, न कोऽपि अत्र दृष्टिपथम् आयाति भयानको जन्तुः । किं पलाय्य प्राणरक्षा कर्त्तव्या इदानीम् ? नहि नहि, 'आपत्सु धैर्यं धारयन्ति बुद्धिमन्तः' एवं विचार्य स तत्रैव स्थितः यावद् भयकारणं ध्यायति, तावत् स मण्डूकः उत्प्लुत्य तीरमागच्छत् । स पुनरपि उच्चैः रटन् तत्रैव सरसः तीरे आतिष्ठत् । तं दृष्ट्वा सिंहः क्रुद्धो भूत्वा अवादीत्–अरे ! ईदृक् स्वल्पकायः जन्तुः मृगेन्द्रं माम् उद्वेजयति । ततः स तं भेकम् आक्रम्य पादप्रहारेण धूलिसाद् अकरोत्, अभाणीच्च–

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥

---

## आत्मपक्षं न संत्यजेत्



एकस्मिन् वने कोऽपि शृगालः आसीत् । स एकदा ग्रामोपान्ते पर्यटन् नीलीभाण्डेऽपतत् । स प्रयत्नेनापि ततः निष्क्रान्तुमसमर्थोऽभवत् । स उपायमचिन्तयत् । स आत्मानं मृतवत् संदर्श्य तत्रातिष्ठत् । प्रातः नीलीभाण्डस्वामी तं मृतं ज्ञात्वा ग्रामाद् बहिरक्षिपत् । ततः स उत्थाय सत्वरं वनम् पलायत । वनं गत्वा स स्वकीयं नीलं वर्णं दृष्ट्वाऽचिन्तयत्–अहो ! अनुकूलं मे दैवम् । अहमिदानीं दैवयोगाद् उत्तमं

वर्णं विन्दामि। प्राप्तकालोऽहमधुनाऽऽत्मनः उत्कर्षं किं न साधयामि। इति विचार्य स सर्वान् पशून् आहूय प्रावोचत्। अरे शृणुत-भगवती वनदेवी ह्यो मां स्वहस्तेन अरण्यराज्ये अभिषिक्तवती, दत्तवती चेममुत्तमं वर्णम्। अद्य प्रभृति राजाहं युष्माकम्। सर्वे यूयं ममाज्ञया वर्तध्वम्। ततः सर्वे पशवस्तस्य भव्यं वर्णं वीक्ष्य प्रणम्याऽवदन्-यथाऽऽज्ञापयति देवः, वयं देवस्य निदेशे वर्तामहे। एवं स शृगालः सर्वेषां वनवासिनां पशूनामधिपतिरभवत्। सर्वे सिंहव्याघ्रवराहादयः तस्य परिजना अभवन्। ततः स स्वज्ञातिभ्यः शृगालेभ्यो लज्जित इव तान् पर्यत्यजत्। ततो विषण्णान् शृगालान् अवलोक्य तेषां यूथपतिरवादीत्--भोः बान्धवाः मा कुरुत विषादम्। अनेन अस्मज्जातीयेन सर्वे वयमन्ये च वनेचराः पशवो वञ्चिताः। वर्णमात्रविप्रलब्धा इमे व्याघ्रादयः इमं राजानं मन्यन्ते। तदस्य विनाशायाहं यतिष्ये। अहमस्य रहस्यं विस्फोटयिष्यामि।

आगच्छत। एष सन्ध्यासमयः। सर्वे मिलित्वा एकपदे महारावं कुर्मः। जातिस्वभावाद् एषोऽपि सिंहव्याघ्रवराहादीनां समक्षं एव अस्माभिः सह ध्वनिं करिष्यति। तमाकर्ण्य सर्वे पशवोऽस्य कपटरूपं ज्ञास्यन्ति।

इति विचार्य ते सर्वे शृगालाः तं धूर्तराजम् उपेत्य प्राणमन्। ततस्ते संभूय महारावमकुर्वन्। जातिस्वभावात् स धूर्तो राजापि तैर्मिलित्वा तथैव महारावं कर्त्तुमारेभे। ततः

तथ्यं परिज्ञाय व्याघ्रस्तं धूर्तराजं हतवान्। तदा शृगालानां यूथपतिरवादीत्——

> आत्मपक्षं परित्यज्य परपक्षेषु यो रतः।
> स परैर्हन्यते मूढो नीलवर्णशृगालवत् ॥

## वरं बुद्धिर्न सा विद्या



एकस्मिन् नगरे चैत्रः, मैत्रः, देवदत्तः, यज्ञदत्तश्चेति चत्वारो ब्राह्मणपुत्रा अभवन्। ते परस्परं मित्राणि आसन्। तेषु प्रथमे त्रयः शास्त्रेषु पारंगताः, परन्तु बुद्धिरहिताः यज्ञदत्तश्चतुर्थस्तु सुबुद्धिमान् केवलं शास्त्ररहितः।

अथ तैर्मित्रैः कदाचित् मन्त्रितम्—को गुणो विद्यायाः, येन देशान्तरं गत्वा तया भूपतीन् परितोष्य धनोपार्जनं न क्रियेत ? स्वदेशे तु मन्दायते गुणानां प्रकाशः। यथोक्तम्—

> स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा।
> विदेशगो नूतनपरिचितैर्जनैर्दृष्टो नरः स्वल्पगुणोऽपि पूजितः ॥

तन्नूनं पूर्वदेशं गच्छामः। तथा कृते कंचिन्मार्गं गत्वा तेषां ज्येष्ठश्चैत्रः प्राह—अहो ! अस्मासु यज्ञदत्तो मूढः, केवलं बुद्धिमान्, न राजप्रतिग्रहो केवलं बुद्ध्या लभ्यते विद्यया विना, तन्नास्मै स्वोपार्जितं धनं दास्यामः। तदेष गच्छतु गृहम्।

ततो मैत्रेण अभिहितम्—भोः सुबुद्धे ! गच्छ त्वं गृहम्, यतस्ते विद्या नास्ति। ततो देवदत्तोऽवदत्—अहो ! न युज्यते

एवं कर्त्तुम्, यतोऽस्माभिर्बाल्यात् प्रभृति एकत्रैव क्रीडितम्, पीतम्, उषितं च, इदानीं तु दुःसहः स्नेहभङ्गः। यथोच्यते–

येन सहासितमशितं हसितं कथितं च रहसि विस्रब्धम्।
तं प्रति कथमसतामपि निवर्तते चित्तमामरणात्॥

तद् आगच्छतु महानुभावः, त्वमस्माकं बन्धुः, अस्माभिरुपार्जितस्य वित्तस्य समभागी भवतु। उदारचरिता वयम्–

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

ततः अरण्यमार्गेण गच्छद्भिस्तैः मृतसिंहस्य अस्थीनि दृष्टानि। ततो मैत्रेण अभिहितम्–अहो! राजदर्शनात् प्राक् तावद् विद्यायाः प्रत्ययः क्रियताम्, इदं किंचिन्मृतं सत्त्वं तिष्ठति, तदेनं विद्याप्रभावेण जीवनसहितं कुर्मः। तत औत्सुक्येन चैत्रोऽस्थिसंचयं करोति, मैत्रश्चर्ममांसरुधिरं संयोजयति, देवदत्तो यावत् प्राणसंचारं करोति तावत् सुबुद्धिर्यज्ञदत्तस्तं निषेधति।

भोः! महापण्डित! तिष्ठतु भवान्। एष सिंहो भविष्यति, यद्येनं सजीवं करिष्यसि। अयं सर्वानस्मान् व्यापादयिष्यतीति सर्वनाशोपायः।

सोऽवदत्–धिङ् मूर्ख! न प्रशंससे गुणानपि। नाहं तव कथनेन विद्यायाः विफलतां करोमि। ततो यज्ञदत्तेन अभिहितम्–तर्हि क्षणं प्रतीक्षस्व, यावदहं वृक्षमारोहामि। तथा कृते यावत्तेन सिंहः सजीवः कृतः, तावत्तेन उत्थाय त्रयोऽपि ते व्यापादिताः। देवदत्तस्तु पुनः वृक्षादवतीर्य सकुशलो गृहमगच्छत्। अत उच्यते–

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः॥

# अन्धः पंगुश्च

रामनगरे कश्चिद् अन्धः आसीत्। स एकदा स्वस्य यष्टिकां गृहीत्वा वाराणसीं गन्तुकामः गङ्गातटगामिनीं पदपद्धतिमन्वसरत्। कार्तिको मासः आसीत्। मार्गे पङ्कः शुष्कोऽभवत्। स वसनैः दूरमगच्छत्। मार्गे ग्रामा आसन्। प्रचारेषु गावः अचरन्। जनानां संचारो मन्दा आसन्। पदपद्धतिरव्यक्ताऽभवत्। सस्यक्षेत्राणि आम्रोद्यानानि च वनानि अभवन्। तेषां मध्यात् मार्गः प्रासरत्।

अन्धः यष्ट्या अनुभूयानुभूय शनैः शनैः अगच्छत्। स मार्गभ्रष्टः अजायत। महता प्रयत्नेनापि स मार्गं लब्धुं नाशक्नोत्। सर्वं दिनं भ्राम्यन् स परिश्रान्तोऽभवत्। अस्मिन्नन्तरे सूर्यस्य आतपः मन्दतामगच्छत्। अस्ताचलस्य दिशामुपैति स्म भगवान् भास्करः। प्रवर्तमानोऽभवत् तमसः संचारः। खगा वृक्षेषु आवासं लेभिरे। ते नीडेषु कलरवं कर्तुं प्रवृत्ताः। गावः हुङ्कारं गोष्ठमार्गेषु प्रचेलुः। शिवाः क्षेत्रेषु अशिवान् शब्दान् अकुर्वन्। एभिः लक्षणैः अन्धः सः 'सायंकालः संजातः' इत्यवागच्छत्। ततः सः 'इतो रात्रिर्भविष्यति, कोऽत्र मम मार्गप्रदर्शको भवेत्, को वात्र मां नगरं नयेत्, कश्चात्र मां गात्रीं रक्षेत्? अवश्यं हिंस्रा जन्तवो मां खादिष्यन्ति' इति स भयातुरोऽजायत।

ततः स नातिदूरे एव कासमानस्य कस्यचिन् मानुषस्य शब्दमशृणोत्। स तस्य शब्दस्य दिशमन्वसरत्, प्रार्थयच्च तं

# कथानां क्रमः



❀



द्वितीयं मुद्रणम् ] [ १ मई ख्रिस्ताब्दाः १९६२

प्रकाशकः—

वैद्यः–रामस्वरूपशास्त्री

बालसंस्कृतं कार्यालयः, आगरा रोड, घाटकोपर, बम्बई-७७

# बालनीतिकथाः

## तृतीयो भागः

---

## गुरुभक्तः आरुणिः

---

कदाचिद् धौम्यः नाम उपाध्यायः आसीत्। तस्य बहवः शिष्याः आसन्। ते सर्वे गुरोः आश्रमे पठन्ति स्म। तेषु आरुणिः नाम शिष्यः अभवत्। स परमः गुरुभक्तः आसीत्। एकदा वर्षति मेघे स उपाध्यायः—'गच्छ, केदारखण्डं बधान' इति आरुणिम् आदिशत्। स त्वरितमेव क्षेत्रम् अगच्छत्। स सर्वान् केदारस्य जलमार्गान् अबध्नात्। एकस्मिन् स्थले स जलस्य वेगं मृत्तिकाबन्धेन रोद्धुं न अपारयत्। स तं पानीयवेगं संरोद्धुं स्वयं तत्र समाविशत्। तथैव शयानः स दिनं रात्रिं च अनयत्। अन्यस्मिन् प्रभाते उपाध्यायः शिष्यान् अपृच्छत्—'क्व आरुणिः गतः' इति। शिष्याः अवदन्, भवता एव प्रेषितः 'केदारखण्डं बधान' इति। ततः उपाध्यायः अकथयत्—सर्वे वयं तत्र गच्छामः, यत्र स इति।

ततः ते सर्वे चेत्रं गत्वा तम् आह्वानाय शब्दम् अकुर्वन्, भोः आरुणे ! क्वासि ? ततः आरुणिः उपाध्यायस्य वचनं श्रुत्वा तस्मात् केदारखण्डात् सहसा उत्थाय तम् उपातिष्ठत् अवदच्च—' अहमासमत्र केदारखण्डे निःसरद् उदकं संरोद्धुं लम्बमानः । भवतः शब्दं श्रुत्वा केदारखण्डं विदार्य भवन्तमुपस्थितः । अभिवादये भवन्तम् । आज्ञापयतु भवान्, किं करवाणि ' इति । उपाध्यायः तमब्रवीत् । यस्माद् भवान् केदारखण्डमवदार्य उत्थितः, तस्माद् उद्दालकः इति नाम्ना भविष्यति इति । अहं प्रीतोऽस्मि, यस्मात् त्वं मम वचनम् अन्वतिष्ठः, तस्मात् श्रेयः ते भविष्यति । सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च शास्त्राणि । ततः आरुणिः गुरोः प्रसादात् झटित्येव सर्वाणि शास्त्राणि पठित्वा महान् पण्डितः अभवत् ।

तपःस्वाध्यायसंयुक्तः सर्वशास्त्रविशारदः ।
आरुणिर्गुरुभक्तोऽभूत् मुनिरुद्दालको महान् ॥

---

## बालिशः काकः



कश्चित् श्रीमान् स्वभवनस्य द्वारदेशे कपोतपालीं कारयामास । तत्र बहवः पारावताः न्यवसन् । तत्रैव समीपे-स्थितस्य उद्यानस्य कोणे निम्बशाखासु कृतकुलाय काककुलमवात्सीत् । एकदा तेषु कीलमुखो नाम कश्चिद् द्रोणो वायसः मृतपतितानि

कानिचित् पारावतानां पतत्राणि निधाय तूष्णीं कपोतानां यूथमविशत्। सरलाः कपोताः नितरां मौनमास्थितं तं न लक्षयामासुः। इत्थं च बहूनि दिनानि व्यतीतानि। ततः कदाचित् स काकः—'किं रूपमङ्गीकृतं मया' इति विस्मृत्य केङ्कारं कर्तुमारभत। ततस्ते कपोतास्तं काकं परिज्ञाय संजातकोपाः चञ्चुभिः प्रहृत्य निर्वासयामासुः। ततः स काककुलमगच्छत्। ततः ते काकाः पुनरपि तस्य किर्मीराणि पिच्छानि वीक्ष्य, 'नायमस्मज्जातीयः' इति तं स्वयूथान् निःसारयामासुः। एवमुच्चपदं कामयमानः अयोग्यः अविवेकी स काकः उभयतो भ्रष्टः, 'वृद्धिमिष्टवतो मूलं मे विनष्टम्' इति पश्चात्तापमकरोत्। इदमत्र सुभाषन्ते कवयः—

यतमाना महत्स्थाय मूढाः लोकबहिष्कृताः।
इतो भ्रष्टास्ततो भ्रष्टाः पतन्ति स्वपदादपि॥



## सत्यशीलः काष्ठच्छित्

कस्यांचिद् वनवसतौ कश्चिद् काष्ठच्छिद् आसीत्। एकदा स नदीतीरे स्थितं कंचन पादपं कुठारेण कृन्तन् आसीत्। हस्तात् च्युतः तस्य कुठारः नद्याम् अपतत्। नदी वेगवती अगाधा च अभवत्। स तरीतुं न अजानात्, इति हेतोः स स्वस्य

कुठारं नद्याः उद्धर्तुं सर्वथा असमर्थः अभवत्। तदा स तस्य जीवनवृत्तिसाधनं कुठारं प्रणष्टं वीक्ष्य तदीतटम् आस्थाय दुःखेन उच्चैः रोदितुं प्रावर्तत। तस्य रोदनं श्रुत्वा वरुणदेवः जलात् निःसृत्य तस्याग्रे अतिष्ठत्। 'किमर्थं रोदिषि भोः?' इत्यपृच्छच्च। सोऽपि, 'मम कुठारः जले पतितः, येन विनाऽहं न जीवामि' इति उत्तरमददात्। दुःखदूनं तं वीक्ष्य वरुणदेवः 'साहाय्यं ते करोमि' इति उक्त्वा पुनः जले न्यमज्जत्, समानयच्च सौवर्णं कुठारमेकम्। तं दर्शयित्वा, 'अयि भोः, अयमेव ते कुठारः' इति काष्ठच्छिदं तमपृच्छत्। स तु, 'अयं मे कुठारो नास्ति' इति प्रत्यवादीत्।

ततो वरुणः पुनः जलमविशत्, आनयच्च राजतं कुठारमन्यम्। स पुनः काष्ठच्छिदं तं दर्शयित्वा, 'कथं भोः! अयं ते कुठारः।' इति अन्वपृच्छत्। पुनरपि स 'अयं मे कुठारो नास्ति' इति प्रत्युत्तरमददात्। भूयोऽपि जलदेवता जलम् अवागाहत। अस्मिन् वारे स तस्य काष्ठच्छिदः कुठारं समानीय तम् अदर्शयत्। अकरोच्च 'नन्वयं ते कुठारः' इति अनुयोगम्।

ततः विहस्य स काष्ठजीवी 'अयमेव मे कुठारः' इति अब्रवीत्। ततः प्रीतः सन् वरुणदेवः,'सत्यं भोः! सत्यशीलोऽसि, न्याय्ये पथि प्रवृत्तोऽसि, सहाय्ययोग्योऽसि' इति प्रशंसावचनानि उक्त्वा, सर्वानपि तान् कुठारान् तस्मै दत्त्वा अवादीत्—

यान्ति न्याय्यप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।
अपथे वर्तमानं तु सोदरोऽपि विमुञ्चति॥

# खलः साधून् मारयति

आस्तां द्वौ वणिजौ। तयोरेको लोभी, अन्यो मत्सरी च। तौ धनकामनया भगवन्तं शिवं समाराधयेताम्। चिरं तपतोस्तयोर्भक्तवत्सलः शिवः प्रसन्नोऽभवत्। स तयोः पुरतः आविर्भूय अवादीत्– 'अहो वत्सौ! महत्तपो युवाभ्यामाचरितम्। प्रसन्नोऽस्म्यहं युवयोस्तपसा श्रद्धया भक्त्या च। इदानीं वरं वृणीतम्। प्राग् यो यद् याचिष्यते, स तदेव लप्स्यते, अन्यस्तु ततो द्विगुणं लब्ध्वा सुखमेधिष्यते इति निश्चितम्।'

इति श्रुत्वा लोभी अचिन्तयत्। नाहमादौ याचिष्ये यतो यथाहं लोभाविष्टस्तथैवायमपि मम मित्रं वर्तते एव परमो लुब्धः। याचिते च मयि प्राक्, एष मत्तोऽपि द्विगुणं लब्ध्वा धनत्तरो भविष्यतीति मेऽसह्यम्। तस्मादयमेव प्रथमं याचताम्, येनाहं विनैव प्रयासेन द्विगुणतां लब्ध्वा सुखी भवेयम्। इति निश्चित्य स तूष्णीमतिष्ठत्।

ततस्तस्य हृद्गतं भावं ज्ञात्वा मत्सरी शिवं प्रार्थयामास। देवदेव! महादेव! यदि मयि प्रसन्नो भवान्, तर्हि ममैकं नेत्रमुत्पाटय। इत्याकर्ण्य, तथैव करिष्यामि इत्युक्त्वा शूली अन्तर्दधौ। मत्सरी च तत्क्षणादेव एकाक्षोऽभवत्, तदा लोभिनस्तस्य द्वे अपि नेत्रे उत्पाटिते अभवताम्। अन्धोऽपि स

लुब्धः परापकारेण आत्मनि भृशं सन्तुष्टोऽभवत्। तदा मत्सरी कंचित् पण्डितं गत्वा, कदाऽयं लुब्धो मरिष्यतीत्यपृच्छत्। स इमं श्लोकमपाठीत्——

लुब्धः स्निग्धोऽनृजुर्मूर्खः प्रभुरेकान्तदारुणः।
बहूनेष खलः साधून् मारयित्वा मरिष्यति॥

## मूर्खराट्

आसीत् पुरा विकटके नाम्नि ग्रामे शंकटको नाम आभीरः। स परिश्रमी बलवान् धीरो लोकप्रियश्चाभवत्। परन्तु स मूर्खोऽभवत्। एकदा स तृणैः स्वगृहं छादयन् उत्तुङ्गात् गृहपृष्ठाद् अपतत्। दूरात् कर्कशे स्थले पतितस्य तस्य शरीरे महान् आघातो जातः। तस्मिन् शोथोऽभवत्। तस्य भार्या तं पर्यचरत्। सर्वे तस्य सम्बन्धिनो मित्राणि परिचिताश्च तं कुशलं प्रष्टुं समागच्छन्। ते—'कुतः पतितोसि, कथं पतितोऽसि, क आघातो जातः? इत्यादिकमपृच्छन्। स तु मूर्खः, खट्वाया उत्थाय घटनाभित्तिपृष्ठमारुह्य 'एवं पतितोऽस्मि' इति पतित्वा प्रादर्शयत्। एवं पुनः पतितस्य तस्य अस्थीनि भग्नानि। स उत्थातुमपि अशक्तोऽभवत्। परिचिताः पुनरपि आगत्य तं तथैवापृच्छन्।

तदा स गालीः प्रदाय तेभ्यः क्रुद्धोऽजायत । लोकास्तं मूर्खमुपहसन्तः स्वं स्वं गृहमगच्छन् । ते प्रोचुः—

आत्मपीडां न जानाति यो जनः स कथं नु ताम् ।
शक्नोति ज्ञातुमन्येषां पशुप्रायः स मूर्खराट् ॥

---

## तृष्णे देवि ! नमस्तुभ्यम्

पुरा हस्तिनापुरे कश्चिद् भिक्षुको ब्राह्मण आसीत् । स भिक्षार्थं ग्रामेषु पर्यटन् मनसि अचिन्तयत्—अहो ! जनानां तृष्णायाः प्राबल्यम् ? यथा यथा तेषां धनानि वर्धन्ते तथा तथैव तेषां तृष्णापि वर्धतेतराम् । यथोक्तम्—

प्रायो धनवतामेव धने तृष्णा गरीयसी ।
अस्ति कोटिद्वयासक्ते लक्षाय प्रवणं धनुः ॥

धिक् तेषां मौर्ख्यम्, ये विपुलेनापि धनेन संतुष्टा न सन्ति । मम यदि भोजनाच्छादनपर्याप्तं धनं स्यात्, तुष्टो भवेयम्, नाहं विपुलं वैभवं कामये ।

दैवयोगाद् गगनवर्त्मना गच्छन् देवानां निधिपतिः कुबेरस्तस्य ब्राह्मणस्येदं वचनमशृणोत् । स आगत्य तस्य पुरस्तस्थौ उवाच चेदम्—' हे ब्राह्मण ! श्रुतं मया तव वचनम्, प्रसन्नोऽहं तुभ्यं कनकं ददामि । अञ्चलं प्रसार्य गृहाण यथेच्छम् । सावधानो भव । न मया दत्तं स्वर्णं भूमौ पतेत् । यदि तवाञ्चलं

भूमिमस्प्रक्ष्यत्, सर्वं स्वर्णं पाषाणमभविष्यत्' इति जानीहि। अपेहि पुराणो वर्तते तवाञ्चलपटः।

भिक्षुकोऽञ्चलं प्रसार्य प्रभूतं कनकं जग्राह। तदा धनदः— 'अपि पर्याप्तमिदं ते जीवननिर्वाहाय' इत्यपृच्छत्। किञ्चिदधिकं देहि, इति सोऽवादीत्। ततः पुनरपि प्रभूतं दत्त्वाऽपृच्छत्— 'ननु पर्याप्तमिदानीम्?' सोऽपि पुनर्देहि इत्युवाच। तदा धनदोऽवादीत्। अपेहि भोः! जीर्णं ते पटाञ्चलम्, न शक्यति गरिष्ठं स्वर्णभारम्। सन्तुष्टो भव। सन्तोषः खलु सुखम्—

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम्।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम्॥ इति

विप्रस्तु—'अलं भयेन, दृढं वर्तते मेऽञ्चलम्, किञ्चिदधिकं देहि।' कुबेरः पुनरपि दत्त्वा, 'त्वमिदानीं धनाढ्योऽसि संवृत्तः, गच्छ गृहम्,' इत्यवादीत्। 'नालमिदं किञ्चिदधिकं देहि,' इति भूयोऽपि विप्रस्तं प्रार्थयत्। पर्याप्तमिदमिदानीम्, सावधानो गृहाण, भरितं तेऽञ्चलम्, नात्रावकाशः, गच्छ गृहमिति कुबेरोऽवादीत्। नहि नहि, देहि देहि, अन्यद्देहि इति दीनेन स्वरेण द्विजोऽब्रवीत्। एतस्मिन्नन्तरेऽञ्चलं भिन्नम्। सर्वं स्वर्णं भूमौ पतित्वा मृण्मयं संजातम्। देवोऽन्तर्दधौ, ब्राह्मणश्च रुदन् गृहमगात्। ततः स शान्ततृष्णावेगः इमं श्लोकं पपाठ—

तृष्णे देवि! नमस्तुभ्यं धैर्यविप्लवकारिणि।
विष्णुस्त्रैलोक्यनाथोऽपि यस्त्वया वामनीकृतः॥

---

# धिग्धनम्

आसीत् श्रीवल्लभपुरं नाम महानगरम्। तत्र व्यापारप्रियो नाम श्रेष्ठी अवसत्। स धार्मिकः उदार ईश्वरभक्तश्चासीत्। तस्य विविधा व्यापाराः आसन्। सर्वं दिनं स व्यापारे लग्नः आसीत्।

स महति प्रासादे निवासमकरोत्। तस्य प्रासादस्य पश्चिमे पृष्ठभूभागे कश्चित् चर्मकारः तेन मार्गेण गच्छतां जनानां पादत्राणानि सन्दधानः गीतानि गायन् सुखेन जीविकां समार्जीत्।

व्यापारप्रियः स सदैव क्रयविक्रयेषु दत्तचित्तः धनलाभं विना न किमपि व्यचिन्तयत्। स भक्तः सन्नपि ईश्वरस्य भजनाय समयं न लेभे। एकदा स रुग्णः अभवत्। रोगिशय्यायां शयान एव स प्रासादपृष्ठे गायतः चर्मकारस्य भजनानि अशृणोत्। भजनानि तस्य मधुराणि भावपूरितानि चासन्। तानि श्रुत्वा स श्रेष्ठी भगवन्तं ध्यातुं लग्नः। नित्यं भगवतो लीलाः ध्यायतः, पुण्यानि कर्माणि स्मरतः, रूपाणि च चिन्तयतः, भगवति तस्य परमा श्रद्धाऽवर्धत। तस्य मनो रोगं न चिन्तयित्वा भगवन्तं चिन्तयामास। श्रेष्ठी स

रोगस्य पीडां विस्मृत्य भगवतो भजनस्यानन्दमन्वभवत्। द्वित्रैरेव दिनैः स स्वस्थोऽभवत्।

स चर्मकारस्य चरित्रं भूरिशः प्रशशंस। ततः प्रसन्नो भूत्वा तं चर्मकारमाहूय स तस्मै रूप्यकशतं प्रायच्छत्। रूप्यकाणि लब्ध्वा प्रणम्य स चर्मकारः प्रसन्नो भूत्वा स्वगृहमगच्छत्। ततः स भजनं स्मरणं भोजनं चापि विस्मृत्य तस्य धनस्यैकां पोट्टलिकां चकार। ततः स सर्वाणि कर्माणि त्यक्त्वा तस्याः धनपोट्टलिकायाः रक्षणे दत्तचित्तोऽभवत्। दिनानि व्यतीतानि। स तद् धनं व्ययाद् रक्षन् महतीं चिन्तामन्वभवत्। स धनलाभस्य फलं विचिन्त्य तस्य त्यागमेव श्रेयस्करं मेने।

अन्यस्मिन् दिने स चर्मकारः श्रेष्ठिनो भवनं गत्वा प्रार्थयत्—हे श्रेष्ठिन्! इमानि तव रूप्यकाणि गृहाण। अहमेतेषां चिन्तया भगवतो भजनं स्मरणं स्वकीयं भोजनं चापि सर्वं व्यस्मरम्। मम एतेषां रक्षणस्य वर्धनस्य चापि महती चिन्ताऽभवत्। एतेषामुपयोगेऽपि मम चिन्ता भवति। व्यये तु महती चिन्ता जायते। एतेषां रक्षणचिन्तया तु रात्रौ निद्रापि नायाति। अहं स्वकीयेन श्रमेण यत्स्वल्पं लभे, तदेव मे सुखायालमिति मन्ये। तदा स धनपोट्टलिकां भूमौ निधाय इमं श्लोकमपठत्—

धनानामर्जने दुःखमर्जितानां च रक्षणे।
आये दुःखं व्यये दुःखं धिग्धनं कष्टसंश्रयम् ॥

# परिहासेऽपि नासत्यम्

आसीत् कदाचित् कस्यांचित् भिल्लपल्ल्यां वडवाप्रसादः नाम मेषपालः। तस्य अजावर्द्धनः नाम पुत्रः अभवत्। वडवाप्रसादस्य गोष्ठे बहवो वृषभाः गावः अजाः एडकाः अश्वाः च आसन्। तस्य पुत्रः नित्यं प्रातः तान् पशून् चारयितुं वनम् अनयत्। स पुनः सायं तान् सर्वान् गृहम् आनयत्, अबध्नात् च गोष्ठे यथास्थानम्। एवं कुर्वतः तस्य बहुविधः कालः अत्यगच्छत्। एकदा वने पशून् चारयतः अजावर्धनस्य मनसि विचारोदयः अजायत—'अहो ! वनेऽस्मिन् एकाकिनः पशून् चारयतः मम बहुः कालः अत्यगच्छत्, किं नाहम् इमान् समीपस्थेषु क्षेत्रेषु कार्ये व्यापृतान् कृषाणान् परिहासेन आहूय मनोरञ्जनं कुर्याम्' इति चेतसि संकल्प्य, स केन उपायेन ते स्वकार्यं हित्वा माम् उपतिष्ठेयुः इति अचिन्तयत्।

ततः स उच्चैः जहास—'अहो ! चिन्तितः तावत् साधीयान् उपायः। सरलेन परिहासस्य जल्पनेनैव ते सर्वे माम् उपस्थास्यन्ति इति मन्ये'।

इति विचार्य स उच्चैः चक्रन्द। 'अहो ! आगच्छत !

त्रायध्वम् ! एष व्याघ्रः आयातः, मां व्यापादयति'। एवंविधं तस्य आक्रन्दनं श्रुत्वा नातिदूरे क्षेत्रेषु व्यापृताः सर्वे क्षेत्रपालाः स्वं स्वं दण्डं खनित्रं दात्रं लाङ्गलं वा समादाय तस्य अजावर्धनस्य रक्षार्थं त्वरिताः समागच्छन्, अपृच्छन् च न वीक्ष्य तत्र व्याघ्रम्–'अहो ! क्व वर्तते व्याघ्रः ? यस्त्वां व्यापादयति'। इति श्रुत्वा स अजापालयुवा सस्मितं प्रोवाच, अहो ! सरला यूयम्। मया केवलं परिहासेन जल्पितमिदम्। यूयं तथ्यमन्य। झटित्येव समागताः। धिङ् मौर्ख्यम्, अविचार्यकृतां युष्माकम्। इति तस्य वचः श्रुत्वा लज्जिताः ते सर्वे परावर्तन्त।

द्वित्राणि दिनानि व्यतीतानि। पुनस्तस्य अजावर्धनस्य मनसि सैव परिहासकल्पना उदियाय। ततः स सहसा चीत्कारम् अकरोत्, 'अरे! आगच्छत ! भोः ! रक्षत ! एष व्याघ्रः मां हन्ति ! त्वरध्वम् ! त्रायध्वम्'। इति श्रुत्वा सर्वे ते क्षेत्रपाः दण्डान् कुठारान् भल्लान् खनित्राणि वा समादाय तस्य रक्षार्थं त्वरिताः घटनास्थलं प्रापुः। तान् दृष्ट्वा स मेषपालसुतः अवादीत्–'अहो ! सारल्यं कृषिविदां प्राकृतानाम्। ये बालकैः अपि वञ्चिताः व्यग्रं धावन्ते। सर्वमिदं मे परिहासविजल्पितम्। नात्र वर्तते व्याघ्रो वृकः शृगालो वा। यात यूयम्, कुरुत कार्याणि। इति आकर्ण्य पुनस्ते ह्रेपिता न्यवर्तन्त।

ततश्च बहूनि दिनानि व्यतीतानि। एकदा तथ्यं व्याघ्रः समागच्छत्। तदा भीतः अजापालपुत्रः उच्चैः चीत्कारान् अकरोत्। स वारं वारम्–'रक्ष रक्ष त्राहि त्राहि' इति आक्रोशत्।

कृषाणाः तस्य चीत्कारम् श्रुत्वा अपि पूर्वं प्रतारितास्ते रक्षार्थं न उपाजग्मुः । ते प्रोचुः—'वञ्चकोऽयं मेषपालसुतः, बहुधा अस्मान् एवंविधैः प्रतारणैः दुनोति । न श्रोतव्यमस्माभिः अस्य वचनम् ।' इत्येवं परस्परं जल्पन्तः ते स्वेषु स्वेषु कार्येषु संलग्ना अतिष्ठन् । तत्र वने स व्याघ्रः बहून् मेषान् छागान् च मारयित्वा अखादत् । इत्यनुभूय स मेषपालसुतः भृशं पर्यतपत् । छात्राः ! न युष्माभिः परिहासेऽपि असत्यं वक्तव्यम् । यः परिहासेऽपि सत्यं विजहाति, स असत्येन लिप्यते पापेन, अनुभवति च पश्चात्तापम् ।

सत्येन भद्रं भवति रक्षितेन सदा नृणाम् ।
परिहासेऽपि नासत्यं वाच्यं प्राणहरं हि तत् ॥

---

## वयं पञ्चोत्तरं शतम्

---

पुरा किल दायादैः कौरवैः द्यूते निर्जिताः पाण्डवाः वने न्यवसन् । राजकुमारास्ते वनेषु बहूनि दुःखानि अन्वभवन् । तदानीं दुर्योधनः राज्यशासनमकरोत् । तस्य मातुलः शकुनिः, अनुजो दुःशासनश्च सचिवौ सखायौ चास्ताम् । एकदा तौ दुर्योधनमुपेत्य एवमूचतुः—राजन् ! इदानीं तव शत्रवः पाण्डवाः राज्याद् वञ्चिताः श्रिया विहीनाश्च सन्ति । ते वन्यानि फलानि भुक्त्वा कथंचित् कालं नयन्ति । त्वं हि महाराजपदे स्थितः शोभसे साम्प्रतम् । तदिदानीं गत्वा पश्य विषमस्थान् रिपून् । 'विषमस्थितौ स्थितानां शत्रूणां दर्शनं हि अभि-

मानववतां नृपालानां परमं सुखम्' इति। सोऽपि दुःसचिवयोस्तयोर्वचनमन्वमोदत। ततः स वनविहारापदेशेन अन्धस्य पितुः धृतराष्ट्रस्यानुमतिं लब्ध्वा सेनया सचिवैः सखिभिश्च सह द्वैतवनं प्रातिष्ठत्।

तस्मिन् वने पाण्डवाः पर्णकुटीः कृत्वा अध्यवसन्। नानाविधैः फलवृक्षैः पुष्पलताभिश्च शुशुभे तद् वनम्। तस्य समीपे महत् सरः आसीत्। यत्र गन्धर्वाः किन्नराः यक्षाश्चागत्य युवतिभिः साकं व्यहरन्। दुर्योधनस्तु तस्यैव सरसः समीपे सेनासन्निवेशं कर्तुं सैनिकान् आदिदेश। गन्धर्वास्तु तान् सैनिकान् विरुरुधुः।

ततस्तु दुर्योधनेन सह तेषां गन्धर्वाणां महद् युद्धं प्रारभत। गन्धर्वाः दुर्योधनं रज्जुभिः बद्ध्वा स्वराजधानीं नेतुं प्रारेभिरे। ततः दुर्योधनस्य चाराः सरभसं पाण्डवान् उपसृत्य आचुक्रुशुः–'भोः! भोः! पाण्डवाः त्रायध्वं शत्रुभिः बद्ध्वा नीयमानं भ्रातरं दुर्योधनम्।' तदा युधिष्ठिरः अर्जुनं भीमसेनं चाहूय आदिदेश–गच्छतम्, आनयतं च गन्धर्वेभ्यः विनिर्मोच्य दुर्योधनम्, इति। तदानीं भीमसेनः प्राह–हे धर्मराज! स दुर्योधनोऽस्माकं शत्रुः। तदनुमोदतां दुर्योधनस्य बन्धनं भवान्। कथं नु–'आनयतं दुर्योधनं' विनिर्मोच्येति विपरीतं भाषते भवान्? ततो भीमस्य वचनं श्रुत्वा युधिष्ठिरोऽवादीत्–

परस्परविरोधे तु वयं पञ्च शतं च ते।
अन्यैः सह विरोधे तु वयं पञ्चोत्तरं शतम्॥

# गतानुगतिको लोकः

अथ धारानगरीं कश्चित् मुण्डी समागच्छत्। स नद्यास्तीरे कुटीरं कृत्वा न्यवसत्। ततः सः 'आपदर्थे धनं रक्षेद्' इति नीतिवचनं हृदि निधाय इतस्ततः सुभिक्षां कृत्वा विपुलं धनं सम्पाद्य एकस्मिन् ताम्रभाजने निक्षिप्य अरक्षत्। न स चौरभयात् कदाचित् शून्यां कुटीम् अमुञ्चत्। ततः कदाचित् मकरसंक्रान्तौ पुण्यकालः समागच्छत्। बहवो धर्मात्मानः पर्वस्नानार्थं दानभाण्डानि गृहीत्वा उज्जयिनीं प्रातिष्ठन्। गतानुगतिकः सोऽपि मुण्डी धनपूर्णं तस्य ताम्रभाजनं स्कन्धे निधाय तान् अन्वगच्छत्। दिवारात्रं चलन्तः ते सिप्रातीरं प्रापुः। रात्रौ धनपूर्णस्य घटस्य वहनेन स यतिः श्रान्तोऽभवत्। न स घटस्य तस्य रक्षणे कस्यापि परिचितस्य साधोरपि विश्वासमकरोत्। प्रभाते शौचस्नानसमये स रजताशेः तस्य घटस्य रक्षणे उपायं चिन्तयामास। स सैकते सिप्रातटे वालुकायां गर्तं कृत्वा तदन्तः कलशं निधाय पुनः सिकताभिः गर्तं पूरयामास। तस्योपरि च सैकतं शिवलिङ्गं निर्माय बिल्वपत्रैः पुष्पैः फलैश्च पूजयामास, ततः शौचं स्नातुं च अगच्छत्। एतस्मिन्नन्तरे जनमेलकं तां दिशं प्रससर्प। गतानुगतिकाः जनास्तत्र सैकतं शिवलिङ्गमर्चितं वीक्ष्य, अस्माभिरपि अत्र तीर्थे आगत्य एवमेव कर्त्तव्यमिति मत्वा बहूनि ते शिवलिङ्गानि निर्ममुः, पूजयामासुश्च।

स्नानं कृत्वा प्रत्यागतः स मुण्डी सर्वं सिप्रातटं शिवलिङ्गमयं दृष्ट्वा 'क्व मे मुद्राभिः पूर्णं तत्ताम्रभाजनम्' इति निश्चेतुमशक्तः परमं नैर्विण्यं गतः इमं श्लोकं पपाठ--

यद्यदाचरति श्रेष्ठः लोकस्तदनुवर्तते ।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥

## पण्डितस्य चातुर्यम्

कश्चिद् राजा नवम् उद्यानम् अकारयत् । स प्रथमे विहारे तत्र उत्सवम् अन्वतिष्ठत् । तदा स मित्रैः आप्तैः पुत्रैः कलत्रैः अनुचरैः सम्बन्धिभिश्च सहितस्तत्रागच्छत् । तत्र बहुविधानि भक्ष्यभोज्यलेह्यचोष्यपेयानि आस्वाद्य सर्वे ते तौर्यत्रिकादिरागरञ्जितमानसा अतिष्ठन् । एवं च परमानन्दपूरनिमग्नेषु सर्वेषु स दिवसः अविदितगतयामः अयासीत् । ततः प्रीतो राजा उवाच--'हे इष्टाप्तसुहृज्जनाः! अस्मिन् उद्याने यस्तरुः यस्मै रोचेत, स तं मदीयोऽयमिति वदतु, मदाज्ञया स तस्यैव भविष्यति' इति । ततो नृपालस्य वचनं श्रुत्वा कश्चिदाह---- चम्पको मदीयो भवतु, अपरः प्राह--कुन्दो मदीयोऽस्तु, अन्यश्च कश्चिदाह--पाटलाप्रियोऽहम् । कश्चिदुवाच--बकुलो मे भवतु । केचित्तु मल्लिकां मालतीं केतकीं वा कामयांचक्रिरे ।

नृपालस्य तस्य सभायां कश्चित् पण्डितः आसीत्, स च सर्वेषां जनानां रुचीः समीक्ष्य अवादीत्--यथेच्छं भवन्तो वदन्तु, मम तु रसालः प्रियः 'रसालो मे भवतु', यं जनाः

चोषं चोषमपि तृप्ता न भवन्ति। यश्च गन्धेन दर्शनेन स्पर्शेन स्वादेनापि च मधुरः। यमास्वाद्य देवताः अपि तृप्ताः भवन्ति।

इतिश्रुत्वा राजा सशिरःकम्पं ब्रूते---साधु विद्वन्! साधु! अत एव जना भवन्तं 'समालत्तम्' वदन्ति। पुष्पाणि सर्वेपि केवलं पूजार्थं दम्भार्थं वा परिधरन्ति जनाः। न तेषां तेभ्यः कश्चिद् आम्रफलेभ्यः इव तृप्तिकरो योगः। पण्डितास्तु दम्भं विहाय याथार्थ्यं स्वीकुर्वन्तीति परमः प्रीतोऽहं भवते। सर्वान् अस्मिन् उद्याने स्थितान् फलवृक्षान् तुभ्यं ददामीति जानीहि। तदा राज्ञो महामन्त्री इदमपाठीत्---

सहृदयाः कविगुम्फनिकासु ये कतिपयास्त इमे न विमृङ्खलाः।
रसमयीषु लतास्विव षट्पदा हृदयसारजुषो न मुखस्पृशः॥

---

## शंकातङ्काय कल्पते

पुरा लक्ष्मणपुरे कश्चित् लक्ष्मीदासो नाम धनपतिरासीत्। तस्य बहूनि गृहाणि पशवः क्षेत्राणि चासन्। तस्य बहवो भृत्या अभवन्। तेष्वेकः कृतविधिर्नामाऽचिन्तयत्—अहो! धनाढ्यतमो वर्ततेऽस्माकं स्वामी। अस्य गृहे स्वर्णं रत्नानि वस्त्राणि बहुमूल्यानि भूषणानि च प्राचुर्येण वर्तन्ते। यद्यहमस्य निधेः कतिपयानि रत्नानि हरेयम्, कः पश्येत्, नायं कदापि रत्नानि गणयतीति।

अथैकदा सोमवतीपर्वणि सपरिकरः स धनपतिः गङ्गास्नानार्थं वाराणसीमगच्छत्। स कृतविधिरन्ये च भृत्या गृहरक्षार्थं नियुक्ता आसन्। लब्धावसरः स कानिचिद् रत्नानि अचोरयत्। अन्येद्युः लक्ष्मीदासः गृहं प्रत्यागच्छत्। स तानि रत्नानि अगणयत्। तानि न्यूनानि अभवन्। चतुरः स रत्नचौरस्योपलब्धये उपायानचिन्तयत्।

स सर्वान् तान् किंकरान् समाहूय पंक्तौ स्थातुमादिशत्। एकस्यां पंक्तौ स्थितेभ्यस्तेभ्यः स एकमेकं दण्डमददात्, आदिशच्च-पश्यत भोः! समानायामाः सन्ति दण्डा युष्माकम्। इमे ऐन्द्रजालिकाभिमन्त्रिताः सन्ति। नयत इमान्, आनयत च प्रातः। युष्मासु यः कश्चित् चौरः स्यात्, तस्य दण्डः वितस्तिमात्रं वर्धिष्यते। तेनाहममुकश्चौरः इत्यनायासेन ज्ञास्यामि, इत्युक्त्वा स तान् गृहाणि अगमयत्।

गृहं गतः कृतविधिरचिन्तयत्—अहो! धनवतां बुद्धिमत्त्वम्। विधिर्यस्मै धनं ददाति स तस्मै मतिमत्त्वमपि यच्छति, 'यस्यार्थाः स च पण्डितः' इत्यभियुक्तोक्तेः। अस्तु, कृतस्तेनोपायः, अहमपि तस्य प्रतिक्रियां जानामि, दण्डोऽयं वितस्तिमात्रं वर्धिष्यते इति विचिन्त्य स तस्माद् दण्डात् वितस्तिमात्रमच्छिनत्।

प्रातः सर्वे भृत्याः स्वं स्वं दण्डमादाय स्वामिनो मन्दिरं प्रापुः। स्वामी सर्वान् दण्डान् अपश्यत्। स कृतविधेः दण्डं छिन्नं वीक्ष्य तमेव चौरं मत्वा राजकीयेभ्यः रक्षापुरुषेभ्यः समार्पयत्।

इत्थं च कृतपापाः स्वयं शङ्किताः संजायन्ते । बुद्धिमन्तस्तान् गत्या मुखाकृत्या वचनेन कार्येण चाभिजानन्ति ।

प्रायेण कृतपापा हि जायन्ते शङ्किताः स्वयम् ।
विज्ञास्तानभिजानन्ति वचोभिर्गतिभिर्मुखैः ॥

---

## अपकारेऽपि साधुता



एकस्यां शालायां बहवश्छात्रा अपठन् । तत्र हरिर्गणेशश्च द्वौ बालकौ आस्ताम् । तौ एकस्यामेव कक्षायामपठताम् । तौ सखायौ अभवताम् । एकदा तयोरध्यापकः कक्षायां छात्राणां लेखान् परीक्षमाणः प्राह—भोः छात्राः! शृणुत सावधानाः, 'अग्रिमे सप्ताहे शनौ यश्छात्रोऽतिस्वच्छं सुन्दराक्षरं गम्भीरार्थं च लेखमानेष्यति, तस्मै प्रधानाध्यापकोऽस्माकं पारितोषिकं दास्यति' इति । सर्वे छात्रा यथासमयं निजान् निबन्धान् उपस्थापयन्तु ।

ततः सर्वेऽपि ते पारितोषिकप्राप्तये परेण प्रयत्नेन स्वान् स्वान् लेखान् सम्पादितवन्तः । प्रायस्तेऽकथयन् हरिरस्मासु श्रेष्ठः, स एवार्हति प्रथमं पारितोषिकम् । गणेशो द्वितीयः, तृतीयस्तु रमेशः, सोऽपि गुर्वर्थं सुन्दरं च लिखति । परन्तु स्वच्छं न लिखतीति दोषः । हरिस्तु हरिरेव, स तु हरति मनांसि परी-

चकाणाम् । न तस्य समानः कक्षायां वर्तते । तस्य लेखाः सन्ति सम्मानार्हाः । स हि पुरस्कारं लप्स्यतेऽवश्यम् ।

रमेशः दुष्टप्रकृतिरासीत् । स कक्षायां हरेस्तथाभूतं सम्मानं न सेहे । स शुक्रवासरे हरेः गृहं गत्वा तमूचे—अहो ! प्रियमित्र ! हरे ! भवान् कक्षायां श्रेष्ठः, इति कृत्वाहं भवते स्वकीयं लेखं दर्शयितुं समागतोऽस्मि । पश्यतु कृपया, दर्शयतु च दोषान्, संशोधयतु च तानिति । सोऽपि साधुस्वभावो यथाशक्ति सुरेशस्य लेखे दोषान् दर्शयित्वा मौनमतिष्ठत् । तदा रमेशः सानुनयं प्राह—मित्र ! देहि तव लेखपुस्तकम् । येनाहं त्वल्लिखितान् लेखान् पठित्वा, तव शैलीमधीत्य, सुगृहीतो भवेयम् । हरिः सारल्येन स्वकीयं लेखपुस्तकं रमेशायाददात् । सोऽपि तद् गृहीत्वा त्वरितैः पदैः गृहमगच्छत् । तत्र स सर्वं तत् पुस्तकं सावधानतया पठित्वा लघुना हस्तेन भकारस्य स्थाने मकारं, सकारस्थाने चकारम्, यत्र तत्र विसर्गमनुस्वारं च लोपयित्वा सर्वं लेखं दूषयामास, निवर्तयामास च सायं हरये तस्य लेखपुस्तकम् ।

व्यतीतानि सप्ताहदिनानि । शनिवारः समायातः । सर्वे छात्राः स्वस्वनिबन्धान् अध्यापकस्य पुरस्तादुपस्थापयामासुः । परीक्षितानि च तानि उत्तरपुस्तकानि परीक्षकैः यथासमयम् ।

चन्द्रवासरे पाठशालायां महती परिषद् उपातिष्ठत् । श्रीमान् प्रधानाध्यापकः सभापतेः स्थानं विभूषयाञ्चकार । लेखपरीक्षायां हरिः प्रथमः आसीत् । किन्तु तस्य लेखे बहुत्र मात्रानुस्वार-

विसर्गच्युतिदोषाः आसन्, इति स प्रथमं पुरस्कारं नार्हतीति कक्षाध्यापकः परिषदं श्रावयामास । रमेशः प्रथमं पुरस्कारं लेभे । सर्वे छात्राः-'भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्' इति कथयन्तो रमेशस्य प्रशंसां चक्रिरे । सर्वे ते प्रसन्ना आसन् । किन्तु रमेशस्य मुखे विषादच्छायामपश्यन् सुहृद्वयः । जानन्तोऽपि न केऽपि तस्य दोषानुद्घाटयामासुः ।

अन्येद्युः हरिः कक्षायां काष्ठपिटकमेकमानयामास । तस्मिन् लेखनी मसीपात्रं शीशिका पुस्तकादीनि बहूनि पुरस्कारदेयानि वस्तूनि आसन् । स तस्य पिटकस्य ऊर्ध्वपुटे-'इदं रमेशाय । सधन्यवादं पुरस्कृतम्' इति लिखित्वा तस्मै प्रायच्छत् । अनेन हरिरसाधौ अपि साधुतां दर्शयामास ।

रमेशोऽतिशयं ललज्जे । स हृदि परं दुःखमनुबभूव । सोऽश्रुपूर्णनेत्रो हरिं गत्वा प्रोच्चैरूचे-'मित्र ! क्षमस्व माम्, अपराद्धं मया तव । महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि' । हरिस्तं चक्षमे । स परमानन्दमन्वभवत् । तस्तौ मित्रे अभवताम् । सज्जनाः क्षमाशीलाः परोपकारिणश्च भवन्तीति कवयो वदन्ति ।

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥

---

## स भवत्युपहासाय

आसीत् वर्धमानपुरे श्रीमट्ठो नाम यमी। तस्य धीजडो नाम शिष्योऽतिमूर्खोऽभवत्। गुरुशिष्यौ च तौ ग्रामाद् वहिः उटजे न्यवसताम्। गुरुः वातरोगेण वक्रदेहोऽभवत्। एकदा शिष्यो भिक्षार्थं नगरमगच्छत्। स तत्र कस्यचित् सूत्रधारस्य चत्वरमपश्यत्। स तत्र काष्ठस्य वंशस्य च बहूनि रुचिराणि पीठादीनि वस्तूनि कुर्वन्तं सूत्रधारमपश्यत्। तत्रैव स सूत्रधारसुतेनातिवक्रं वंशं तैलाभ्यङ्गपूर्वं वह्नितापेन तापयित्वा सरलीक्रियमाणं ददर्श। तं तथा कुर्वन्तं वीक्ष्य स मूर्खः सूत्रधारं पप्रच्छ–'भोः किमिदं क्रियमाणमस्ति ?' इति। तेनोक्तम्–वक्रवंशस्य सरलत्वम्। ततः सोऽचिन्तयत्-अहो! वातव्याधिना पीडितस्य वक्रशरीरयष्टेः मम गुरोः इदमेवौषधं भवेत्। वक्रस्य सरलीकरणे साधीयानयं प्रकारः। ततः स वज्रमूर्खो मठं गत्वा गुरोस्तैलाभ्यङ्गमकरोत्। ततश्च तीव्रेणाग्निनाऽतापयत्। तापदग्धः स वराको गुरुः उच्चैः आक्रोशत्। तदाऽऽक्रन्दं श्रुत्वा बहवो ग्रामजनाः समागच्छन्। ते तं तथाकुर्वन्तं वारयन्ति स्म, अकथयन् च-अरे मूर्ख! एवं तीव्रतापेन तापयित्वा मारयसि किं वृद्धं स्वगुरुम् ? एवं बहूनां लोकानां वचनानि श्रुत्वा सोऽवादीत्–भवन्तो मूर्खाः, ये वातवक्रस्यापि चिकित्सितं न जानन्ति। अहमनेन विधिना वक्रस्य स्वगुरोः सरलतां कुर्वाणोऽस्मि।

ततो बहुभिः प्रकारैः बोधितं तं मूर्खशिष्यं जनास्तस्माद् व्यापारात् निवर्तयाञ्चक्रिरे। लोकास्तमुपजहसुरूचुश्च–

मूर्खो विनोपदेशेन यो कार्येषु प्रवर्तते।
स भवत्युपहासाय यमिनो मूर्खशिष्यवत्॥

# विद्या न विनाध्ययनम्



आसीत् पुरा वाराणस्यां तपोदत्तो नाम विप्रः। तस्य पिता शैशवे तं पाठशालामगमयत्। स चञ्चलोऽलसश्चाभवत्। स विद्यानां पठने मनो न दत्तवान्। तस्य विद्या नाभवत्। मूर्खं तं जना आनन्दन्।

गच्छत्सु कतिपयेषु वर्षेषु स यौवनमवाप्नोत्। युवानं सुन्दरं सुकुले जातमपि विद्याविहीनं तं लोका नापूजयन्। मूर्खोऽसि इति सर्वे नगरनिवासिनः तं पर्यवदन्।

ततो लज्जितः स एकदा रात्रौ गृहात् निरसरत्। स भागीरथीतीरमगच्छत्। तत्र स गङ्गां प्रविश्य प्राणान् त्यक्तुमैच्छत्। स सोपानपंक्तौ स्थित्वा क्षणमशोचीत्। 'प्राण-परित्यागः न वरम्' इति च स निरचिनोत्।'

प्रातः स नौकया गङ्गामुत्तीर्य परस्मिन् तटे स्थितं रामनगरमविशत्। तत्र स मन्दिरस्याङ्गणे स्थितं कञ्चित् संन्यासिनं प्राणमत्, अकथयच्च स्वस्य परिचयम्। संन्यासी च म तपोभिर्विद्या भवन्ति इति तमुपादिशत्। तस्योपदेशं श्रुत्वा स पुनः भागीरथीतीरमयासीत्। स विद्याप्राप्तये तप-स्तप्तुमतिष्ठत्। प्रथमं स कन्दान् फलानि भुक्त्वा बहुतिथं तपोऽतपत्। ततः स पानीयं पीत्वा तपः अकरोत्। पुनश्च स केवलेन वायुना जीवमानः तपांसि अतपत्।

इत्थं च कठिनं तपः समाचरन्तं तं वीक्ष्य नारदो देवाधिपं मघवानमुपेत्य न्यवेदयत्—

हे देवदेव ! कश्चिद् द्विजवरः गङ्गातटे कठिनं तपः कुर्वाणो वर्तते । स तपसा तव पदं विजेतुं कामयते । नारदस्य वचः श्रुत्वा वज्रपाणिः द्विजरूपधरो गङ्गातटमुपागच्छत् । स उग्रे तपसि स्थितं तं द्विजं निवारयितुकामः उपायमचिन्तयत् ।

ततः शक्रस्तं दर्शयन् गङ्गायाः वालुकाः उद्धृत्य उद्धृत्य सवेगं वहति जले अक्षिपत् । स वारं वारं वालुकाः समादाय सवेगे गङ्गाप्रवाहे अपातयत् एवं कुर्वतः शक्रस्य घटिकायुग्मं व्यतीतम् । तपोदत्तः तपसि स्थितः तं तथाकुर्वन्तं सकौतुकमपश्यत् । स तस्य कार्यं निरर्थकमिव मत्वा मुक्तमौनः सविस्मयं समुपेत्य द्विजरूपधरं देवाधिपमपृच्छत्—'अहो ! द्विजराज ! किमिदं करोषि निरर्थकम् ?' द्विजाकृतिः शक्रो न किमप्यवदत् । ततः सनिर्बन्धं तेन पृष्टः सः'लोकानां तारणाय गङ्गायाः सेतुं बध्नामि' इत्यवादीत् । ततो विहस्य तपोदत्तोऽब्रवीत्—रे मूर्ख ! कथमाभिः गङ्गायाः ओघहार्याभिः वालुकाभिः सेतुः बद्धुं शक्यः, निरर्थकं त्वं करोषि श्रमम्' ।

इति श्रुत्वा द्विजरूपधरः शक्रस्तं तपोदत्तमकथयत्—हे तपस्विन् ! यदि वालुकाभिः सेतुः बद्धुमशक्यः, तर्हि विना पठनं विना श्रुतं च विद्यासिद्धिरपि न सुशक्या इति जानीहि । कथं त्वमिदानीमसम्भवं सम्भवं कामयसे तपोभिः ? इदं तेऽरण्यरोदनम् । एवं यदि भवेत्, तर्हि न कोऽपि स्वाध्यायश्रमं कुर्यात् ।

इयं शशविषाणेच्छा व्योम्नि वा चित्रकल्पना ।
अनक्षरो लिपिन्यासो यद् विद्याऽध्ययनं विना ॥

# बालकृष्णस्य कन्दुकम्

एकदा सन्ध्याकाले माता यशोदा स्वस्य आत्मजं श्रीबालकृष्णं लालयन्ती रमयाम्बभूव । तदा चन्द्रमाः परमया शोभया कौबेरीं दिशं विभूषयांचकार । बालः श्रीकृष्णः मातुः अङ्कात् अवतीर्य अङ्गणे रन्तुं प्रारेभे । नातिदूरे तिष्ठन्ती माता रममाणं पुत्रम् अपश्यत् ।

तदा बालः श्रीकृष्णः कन्दुकम् इव वर्तुलं गगने भ्राजमानं चन्द्रमसं ददर्श । स तं क्रीडनकं मन्यमानः इव हस्तौ प्रसार्य ग्रहीतुं चक्रमे । स चन्द्रमसा क्रीडनकेन क्रीडां कर्तुम् ऐच्छत् । स रोदितुं प्रारेभे ।

माता यशोदा सुतम् अङ्के निधाय प्रोवाच–'वत्स ! बालकृष्ण ! तत् क्रीडनकं नास्ति, स चन्द्रमाः अस्ति । स बहुदूरे गगने प्रकाशते । न वयं तं ग्रहीतुं शक्नुमः । अहं ते शोभनानि क्रीडनकानि आनेष्ये,' इति । ततः माता यशोदा बहूनि क्रीडनकानि आनिनाय । परन्तु बालकृष्णः–' न मह्यमिमानि क्रीडनकानि रोचन्ते ' इत्युक्त्वा प्रत्याचख्यौ, प्रारेभे च पुनः उच्चैः स्वरेण रोदितुम् । न सा तं सन्तोष्टुं शशाक ।

किंकर्त्तव्यविमूढा आसीत् वराकी माता । न सा सुतस्य तोषाय कमपि उपायं विवेद । बालकृष्णस्य रोदनं श्रुत्वा बह्व्यः गोपवध्वः समागच्छन् । सर्वा अपि ता बालकृष्णस्य रञ्जनाय

प्रयेतिरे, न कापि सफलोपाया बभूव । तदा एका वृद्धा गोपमाता आगत्य बभाषे–' अहं बालकृष्णं तोष्टुं जानामि ' इत्युक्त्वा सा बालस्य श्रीकृष्णस्य हस्तयोः दर्पणं ग्राहयामास, आह च–' पश्य वत्स ! अयं बालचन्द्रः तव हस्ते वर्तते, इदानीम् अनेन रमस्व ' इति । तदा श्रीबालकृष्णः दर्पणं हस्ताभ्यां गृहीत्वा तत्र प्रतिबिम्बितेन चन्द्रेण रेमे । ततस्ता गायन्ति स्म––

हे कृष्ण ! नारायण ! वासुदेव !
गोविन्द ! वैकुण्ठ ! मुकुन्द ! विष्णो !
हे पूर्णकाम ! अभिराम ! अनन्त ! खेल
दिव्येन तेन विधुना सुरकन्दुकेन ॥



## परानुकारी खरः

पुरा वाराणस्यां सहस्रगुप्तो नाम वैश्यः आसीत् । तस्य गृहे गर्दभः वृषभश्च पालितौ अभवताम् । पशू तौ वैश्यस्य तस्य भारान् अवहताम् । एकस्मिन् दिने स वैश्यः गर्दभे तूलम्, वृषभे लवणस्य गोणीं च निधाय हट्टं प्रातिष्ठत् । मार्गे काचिद् गिरिणदी समागच्छत् । तस्यां गाधं जलमभवत् । तामुत्तर्तुम् उच्चावचेन मार्गेण गच्छतां तेषां महान् प्रयासः अजायत । भारेण श्रान्तः वृषभः जलेऽपतत् । जलस्य धारया लवणमद्रवत् ।

तेन वृषभस्य भारः न्यूनोऽभवत्। स उत्थाय लघुभिः पदैः सुखेनागच्छत्।

इति वीक्ष्य खरोऽपि भारं लघूकर्तुं यतते स्म। सोऽप्यास्मानं जलेऽपातयत्। तद् वीक्ष्य वैश्यः क्रुद्धोऽजायत। स दृढेन दण्डेन खरमताडयत्। तूलस्य भारश्चापि जलं धृत्वा परां गुरुतां गच्छति स्म। खरः परमेणापि कष्टेन तं वोढुं नापारयत्। वैश्यस्तं वारं वारमताडयत्। ततो मूढः स गर्दभः स्वस्य दुर्बुद्धिं निन्दन् परं पश्चात्तापमकरोत्। अत उच्यते--

परानुकारं यो मूढः कुरुते दृष्ट्वा परोदयम्।
स भवत्युपहासाय भारवाही खरो यथा॥



## पुनर्मूषिका

-❧-

पुरा दण्डके वने तपोधनो नाम मुनिः आसीत्। स एकदा काकस्य मुखात् पतितां मूषिकाम् अपश्यत्। दयालुः स तापसः आहारं पानीयं च दत्त्वा ताम् अपालयत्। ततः स तां काकादिभ्यः यातुकेभ्यः जन्तुभ्यः अरक्षत्। अन्यदा आश्रमे स्वैरं भ्रमन्तीं तां मूषिकां दृष्ट्वा बिडाली हन्तुम् अन्वधावत्। ततः स ऋषिः तपःप्रभावेण तां मूषिकामपि बलिष्ठां बिडालीम् अकरोत्। बिडालीं तां कदाचित् सारमेयः हन्तुम् अन्वधावत्। ततः

कृपालुः स साधुः विडालीं तां पीनां हृष्टां सारमेयीम् अकरोत्। सारमेयी तु सा वनचरेभ्यः व्याघ्रेभ्यः भयम् अन्वभवत्। सिद्धः स पुरुषः तामपि पुनः व्याघ्रीमकरोत्। व्याघ्री तु सा जातिजातेन दोषेण तमेव मुनिं व्यापाद्य भक्षयितुम् ऐच्छत्। मुनिः अपि तस्याः अभिप्रायं ज्ञात्वा अक्रुद्धः 'एव त्वं पुनर्मूषिका भव' इति ताम् अशपत्। क्षणाद् एव भयङ्करा सा व्याघ्री पुनर्मूषिका भूत्वा जातेः स्वभावेन बिलम् अविशत्। अत्र उच्यते—

यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः।
व्याघ्री स्वभावदोषेण पुनर्मूषिकतां गता॥

---

## रामायणी कथा

---

आसीत् पुरा अयोध्यायां महाराजो दशरथः। तस्य कौशल्या कैकेयी सुमित्रा चेति तिस्रो भार्या आसन्। ताभ्यः तस्य चत्वारः पुत्राः अभवन्। कौशल्यायाः रामः, कैकेय्याः भरतः, लक्ष्मण-शत्रुघ्नौ च सुमित्रायाः सुतौ आस्ताम्।

ते राजकुमाराः गुरोः वशिष्ठात् सर्वाणि शास्त्राणि अपठन्, विश्वामित्रात् च शस्त्रविद्याम्। कृतविद्यास्ते सुशीलाः विनीताः लोकप्रियाश्चासन्। ते मातापित्रोः भक्ताः गुरूणामाज्ञाकराः

प्रजायाः स्नेहभाजनाश्च अभवन्। तेषु रामः परमः पितुः भक्तः आसीत्।

एकदा रामलक्ष्मणौ विश्वामित्रेण सह तस्याश्रममगच्छताम्। स मुनिभिः साकं यज्ञमकरोत्। तत्र राजकुमारौ तौ यागस्य विघातकान् राक्षसान् अहताम्, अरक्षतां च ऋषीन्। ततस्तौ मुनिभिः सार्धं जनकपुरमगच्छताम्। तत्र जनकस्य आत्मजायाः सीतायाः स्वयंवरोऽभवत्। रामस्तत्र शिवस्य पिनाकं भंक्त्वा सीतां पर्यणयत्। अन्येषामपि तस्य भ्रातृणां तत्रैव विवाहाः अभवन्। ततो महाराजः दशरथो रामाय राज्यं दातुमैच्छत्। सर्वेऽपि तदा राज्याभिषेकस्य संभाराः कल्पिता आसन्। एतस्मिन्नन्तरे मन्थरा नाम दासी कैकेयीम्, 'रामे भूपतौ तव सुतो दासो भविष्यति, न तदा त्वां कोऽपि राजमातरं कथयिष्यति' इत्युपाजपत्। कैकेयी च नृपमुपजप्य भरताय राज्यं रामाय वनवासं च दातुं हठमकरोत्।

राजा रामाय वनवासमददात्। पितुः आदेशेन रामः सीता च वनमगच्छताम्। लक्ष्मणोऽपि तौ अन्वगच्छत्। वने राक्षसानां राजा रावणः सीतामहरत्। रामोऽपि बालिनं हत्वा सुग्रीवेण सह मैत्रीमकरोत्। स तस्य साहाय्येन महत्या वानराणां सेनया रावणस्य राजधानीं लङ्कां समाक्रमत्। ततो रामरावणौ घोरम् अयुध्यताम्। जनाः 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यकथयन्। रामः सर्वं राक्षसकुलमहन्। रावणस्यानुजो विभीषणस्तु युद्धात् प्रागेव रामं शरणमगच्छत्। स तं लङ्कापतिं कृत्वा

सीतामादाय सपरिकरोऽयोध्यां प्रत्यगच्छत्। तत्र राजासने आस्थाय चिरं प्रजामशासत्। स लोकाराधने तत्परः आसीत्। तस्य राज्ये लोकाः समृद्धाः सुरक्षिताः सुखिनश्चासन्। रामचन्द्रो लोकमर्यादामरक्षत्। तं जनाः मर्यादा-पुरुषोत्तममाहुः।

वन्दामहे महेशानचण्डकोदण्डखण्डनम्।
जानकीहृदयानन्दचन्दनं रघुनन्दनम्॥

---

## पापाय परपीडनम्



पुरा कोऽपि नृपतिरासीत्। नगराद् बहिः तस्य उद्यानमासीत्। उद्यानस्य समीपे एव कृषाणस्य कस्यापि सस्यपूर्णं क्षेत्रमासीत्। उद्याने विविधा खगा आसन्। ते वृक्षेषु कृतकुलायाः सुखेनावसन्। कृषाणः सर्वं दिनं महता श्रमेण क्षेत्रे कार्यमकरोत्। यदा यदा हि तस्य सस्यानि परिपाकमवाप्नुवन् तदा तदैव ते उद्यानवासिनः विहंगाः सर्वमन्नं खादन्ति स्म।

इत्थं च खगैः आयासितः स कृषाण उपायमचिन्तयत्। स तेषां काक-कीर-कपोतादीनां बन्धनाय तत्र जालमतनोत्।

दैवात् कश्चित् चिल्लः कपोतमनुधावन् तत्र जाले अपतत्। ततः स तस्माज् जालाद् आत्मानं मोक्तुं महता बलेन प्रयत्नमकरोत्, परन्तु सर्वेऽपि तस्य उपाया विफला आसन्। स पाशे बद्धः पश्चात्तापं कुर्वन् पापानामिदं फलमिति अचिन्तयत्।

नातिदूरे एव क्षेत्रकर्षणप्रसक्तः कृषाणस्तं चिल्लं तत्र पाशे पतितमपश्यत्। स आगत्य तं चिल्लमगृह्णात्, अभवच्च उद्यतः छुरिकया तं हन्तुम्।

प्राणपरीप्सुः चिल्लः सकरुणं तं प्रार्थयत्। भोः क्षेत्रपते! प्राणदानं देहि मह्यम्। दयस्व मयि, न मया तव कोऽपि अपराधः कृतः। अहं कपोतमनुगच्छन् अस्मिन् जालेऽपतम्। नाहं कदापि तव क्षेत्रे जायमानं धान्यं खादामि। अन्ये खगा अन्नादाः सन्ति। अहमस्मि मांसभोजी। काकाः कीराः पोताश्च मे भोजनम्। मुञ्च माम्। नाहं कदापि पुनस्तव क्षेत्रं प्रवेक्ष्यामि इति शपथं ब्रवीमि।

कृषक आह–भद्रमुख! यथा त्वया न मम किमपि अपराद्धम्, तथैव शुकैः वायसैः पारावतैश्चापि न ते किमप्यपराद्धम्, तांस्त्वं खादसि निरपराधान्, इति निरपराधमपि अहं त्वां हन्मि' इति वदन् स छुरिकया तस्य शिरोऽच्छिनत्। तत्रैव वने कृतोटजः कश्चित्तापसः सर्वमिदं समीक्ष्य, 'पापाय परपीडनम्' इति ऊर्ध्वबाहुरब्रवीत्—

अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

## मातृभक्ताः अजापुत्राः



कस्मिंश्चिद् वने काचित् छागी अवात्सीत्। सा पर्वतस्य गह्वरे गेहम् अकार्षीत्। सा शावकान् सुषुवे। सा नित्यं चरितुं

वनं जगाम। एकस्मिन् दिने वनं गच्छन्ती सा पोतान् आदिदेश– 'रे वत्साः! द्वारमर्गलेन पिधायान्तर्गृहं तिष्ठत। अहं सायमागमिष्यामि। तदैव समाहूता अपावृणुत द्वारम्। ममानुपस्थितौ यदि कश्चिद् अपरिचितः समागच्छेत्, न तस्य कथनेन गृहमपावृतद्वारं कुरुत। कदाचित् कश्चिद् धूर्तः छलं कुर्यादिति हेतोः।

तत्रैव नातिदूरे तमालस्य लतायां कश्चिद् वृकः आत्मानं निगूहमानोऽभवत्। स सर्वमजायाः स्वपुत्रेभ्य उपदेशमशृणोत्। ततो गतायां चाजायां स वृकः कन्दराद्वारमुपसृत्य कृत्रिमेण स्वरेण छागीपोतान् आकर्णयाञ्चकार–'पुत्रकाः! उद्घाटयत द्वारम्' इत्यवादीच। अजायाः शिशवः चतुरा आसन्। ते पुनः गवाक्षमुखेन बहिश्चरन्तं वृकं ददृशुः, अवजग्मुश्च वृकस्य कपटरूपम्। ततस्ते तं वृकमवादिषुः, अपेहि रे घातुक! कपटेन त्वमजेव शब्दायसे, परन्तु आकारेण तु साक्षात् कालकरालः व्यापाद्य भक्षकः वृकः एव। न वयं जातु द्वारमुद्घाटयिष्यामः। पलायस्व त्वमितो वनम्, अन्यथा ते कुशलं नास्ति।

इत्थं च ये बालकाः अजायाः शावका इव मातापित्रोः गुरोश्च कथनमनुपालयन्ति, ते चिरं जीवन्तो लोके भद्राणि पश्यन्ति। अत्रेदं सुभाषितम्—

मातापित्रोर्गुरूणां वा ह्यादेशं पालयन्ति ये।
दुःखमुत्तीर्य ते बाला जीवन्ति सुखपूर्वकम्॥

---

# अस्माकं प्रकाशनानि

| | | एकस्य प्रतेः मूल्यम् रु०न.पै. |
|---|---|---|
| संस्कृतव्याहारः | भागाः १—५ | ०.७५ |
| सप्त विभक्तयः | | ०.७५ |
| पञ्च सन्धयः | | ०.७५ |
| संस्कृतप्रवेशिका | भागाः १—३ | ०.७५ |
| बालनीतिकथाः | भागाः १—८ | ०.६३ |
| संस्कृतसोपानम् | भागाः १—३ | १.२५ |
| प्रहेलिकाशतकम् | | ०.५० |
| समासाः | | ०.५० |
| संभाषा | भागाः १—५ | ०.६२ |
| संभाषा English | भागाः १—५ | ०.६२ |
| लौकिकन्यायरत्नमञ्जूषा | | २.२५ |
| संस्कृतप्रबन्धचन्द्रिका | भागाः १—३ | १.२५ |
| सुन्दरं संस्कृतम् | भागाः १—३ | ०.७५ |
| भारतीयाः महापुरुषाः | | १.२५ |
| कुमारसंभवम् | ( संक्षिप्तगद्यम् ) | ०.७५ |
| रघुवंशम् | ( संक्षिप्तगद्यम् ) | ०.७५ |
| बालरामायणम् | | ०.७५ |
| लघुनिबन्धावली | | १.०० |
| संस्कृतवर्णमाला | | १.०० |
| कृदन्ताः | | ०.५० |
| शालेयसुभाषितानि | | ०.६२ |

प्राप्ति स्थानम्—

बालसंस्कृतकार्यालयः

आगरा रोड, घाटकोपर, बम्बई-७७

दिल्ली शाखा— ८०, कोटला रोड, नई दिल्ली-१

# कथानां क्रमः





द्वितीयं मुद्रणम् ] [ १ मई खिष्टाब्दाः १९६३

प्रकाशकः—

वैद्यः–रामस्वरूपशास्त्री

बालसंस्कृतं कार्यालयः, आगरा रोड, घाटकोपर, बम्बई-७७

मुद्रकः—

सार्वदेशिकप्रेस, दरियागंज, दिल्ली-७

# बालनीतिकथा

## चतुर्थो भागः

### विकत्थना शृगाली

कदाचित् सिंही शृगाली च वने भ्रमन्त्यौ मिलिते। कथाप्रसङ्गेन ताभ्याम् 'पशुषु का जातिर्बहुप्रसवा' इति वस्तूपन्यस्तम्। एतस्मिन्नन्तरे जम्बुकी सिंहीमश्रावयत्—'प्रसूतिविषये काऽन्या पशुजातिः शक्नोति शृगाल्याः षोडशीमपि कलां स्प्रष्टुम्'। पुनः साह—प्रतिवत्सरं यद्यपि नाधिकवारं तथाप्येकवारं तु वयं प्रसूमहे एव। परन्तु काश्चन वन्याः पशुजातयः ईदृश्योऽपि सन्ति, या अखिलेपि जीविते सकृदेव प्रसुवते, तदाप्येकमेवापत्यम्। एतेनापि च ताः प्रायो नासिकामुन्नमय्य पराः विगणयन्ति व्यर्थगर्विण्यः।

इत्थं शृगालीवचनं निशम्य सिंही मनस्यचिन्तयत्—'अहो! क्षुद्रा जम्बुकीयं मामुपलक्ष्य सोपालम्भं ब्रवीति' इति। ततः सा तामाह—'अये! जानामि, यूयं बहुप्रसवा इति वस्तुगत्या सत्यम्। किन्तु वेत्सि त्वम्, कीदृशा नाम शावका युष्माकम्? ननु शृगाला एव न सन्ति ते? सारमेयानां सजातयः? -

वयं तु सकृदेव जनयामः। परं पश्यसि ? सिंहाः सन्ति प्रसूतयो नः। ते खलु पशूनां पतयः सन्ति। वयं च सिंहानां मातरः स्मः। इति सिंहस्य नाममात्रेणैव भीता जम्बुकी पलाय्य बिलमविशत्। इत्थं च मूर्खा यावद् विदुषां प्रभावं न जानन्ति तावदात्मानं स्तुवन्ति, विज्ञातप्रभावास्तु ते लज्जन्ते स्वयम्। इदमत्र कवयो भाषन्ते—

आत्मनस्तुङ्गतामुष्ट्रस्तावद् भूयः प्रशंसते।
तालस्य तलं यावन्न स गच्छति पामरः॥

---

## मूर्खः शृगालः

एकस्मिन् अरण्ये कश्चिद् मधुरप्रियः शृगालः निवसति। स आत्मानं बुद्धिमन्तं मन्यते। तस्य मित्राणि तं दक्षं वदन्ति। स नित्यमिक्षुक्षेत्रं गत्वा इक्षून् खादति। एकस्मिन् दिने स प्रातरेव क्षेत्रं गच्छति। यावत् स क्षेत्रे पदं निदधाति तावदेव स मधुकरीणां चपालं पश्यति। स मधूलिकानां छत्रं न परिचिनोति। अतः कण्टकितं पनसस्य फलमिव इक्षुकाण्डस्य तस्य पर्यन्ते लम्बमानं तद् 'इक्षोः फलम्' इति मन्यते।

चपालं दृष्ट्वा सोऽतिप्रसन्नो भवति, कथयति च, अहो! मेऽनुकूलं दैवम्। लोकेषु सुदुर्लभम्, इक्षोः फलं मयाद्य लब्धम्। अचिन्त्यमुपनतमिदम्, प्रसादचिह्नं खलु मनो-

रथावाप्तेः। अद्य शुभं भविष्यति। अतिसुन्दरं फलमिदम्, न जाने किंभूतं भवेत् एतस्य माधुर्यम्।

इति विचार्य स फलं ग्रहीतुं यावत् चपालम् उपसर्पति तावदेव मधुकरीभिः दष्टः स पश्चात् पादयोः पतति। पुनश्च पीडाभिभूतः स कथंचिद् उत्थाय प्राणान् आदाय पलायते। मधुमक्षिकाः तस्य पश्चाद् धावन्ते। अतः परं नात्र आगमिष्यामि, इति स शपथानां शतं करोति, स देवात् प्राणत्राणं प्रार्थयति— हा देव! त्राहि माम्, हा देव! रक्ष माम् इति।

इत्थं च सुदूरं पलायमानं शृगालं वीक्ष्य मक्षिका निवर्तन्ते। शृगालस्य विपत्तिः टलति। स वृक्षस्य तले तिष्ठति। 'अहो! लब्धाः प्राणाः' इति स उच्छ्वसति।

ततश्च स मनसि तर्कयते—अहं नित्यं चेत्रं गच्छामि न कदापि किमपि घटते, अद्य तु अघटनीयं घटितम्, कुतः अयं विपत्तेः पर्वतः आपतितः। किन्तु इक्षोः फलं खादितुं कामनया इयं विपद् आयाति। नाहं पुनः फलमिदं खादितुं कामये।

दिनानि प्रयान्ति। सप्ताहाः निःसरन्ति। मासाः अतिगच्छन्ति। मृगालमिश्रस्य देहाद् दंशाघाताः नश्यन्ति, शोथश्च विलीयते। स पुनः चेत्रस्य मध्यात् प्रचरति, पश्यति च चपालम्, 'इदम् इक्षोः फलम्' इति मन्यमानः। ननु फले तत्र कीटाः सन्ति। ते दंशवन्तः सन्ति। ते एव दशन्ति। प्रयर्म

तान् दूरीकुर्याम्, पुनश्च खादेयं फलम्। न तदा कापि बाधा भवेद् इति च आलोचयति।

अहो! इक्षुकाण्डस्य माधुर्यम्। तस्य फलं तु किंभूतं मधुरं भवेद्, इति स वारं वारं स्मरति। तस्य मुखे मधुरं पानीयमायाति। स छत्रकस्य समीपं गच्छति। स दूरादेव यष्टिकया छत्रं स्पृशति। सहसा मधुकरीणां संघः तमाक्रमति। क्रुद्धाभिः ताभिः संदष्टः स मृतकल्पः संजायते। तस्य देहः शोथमासाद्य कन्दुकः इव वर्तुलः संजायते। स रुग्णो भवति।

बहुभिः मासैः स पुनः स्वस्थो भवति। न कदापि स तस्य क्षेत्रस्य समीपतः प्रयाति। स तस्मात् क्षेत्राद् बिभेति। न स कदापि इक्षुफलस्य दर्शनमपि कामयते। स पुनः वृद्धः संजायते। पुत्रेषु पौत्रेषु च वर्तमानः सः—योऽसंस्तुतं चिन्तयति, तस्य महत्यः विपदः समायान्ति इति च उपदिशति। स बहुधा पठति पद्यमिदम्—

यः संस्तुतं परित्यज्याऽसंस्तुतेषु प्रवर्तते।
शृगालस्येव विपदः तस्य सन्ति पदे पदे॥

# खलः फेरुः

कस्मिंश्चिद् अरण्ये कोऽपि फेरुः अवसत्। स एकदा वने भ्रमन् कस्मिंश्चित् कूपे अपतत्। कूपे प्रभूतं जलं नासीत्, तथापि शीतार्तः स मृतकल्पोऽभवत्। कूपान् निःसर्तुं स परमं प्रयत्नमकरोत्। स पुनः पुनः उच्चैः उदपतत्, स वारं वारमकूर्दत्। तथापि स कूपाद् बहिः निःसर्तुं नापारयत्। ततः स 'मरिष्यामि' इति पुनः पुनः मनसि अचिन्तयत्। न स तत्र कमपि रक्षकं नापि चोपायं लभते स्म। स जीवनान् निराशोऽभवत्।

अस्मिन्नन्तरे कश्चित् पिपासुः छागः तत्र कूपे जलं पातुं समागच्छत्। कूपे तस्मिन् सोपानानि नासन्। स कूपस्य तटेऽतिष्ठत्। स कूपेऽपश्यत्। तत्र स फेरुं वीक्ष्य साश्चर्य-मवादीत्— किं भो मित्र। वर्तते ते कुशलम्? कियन्मानं वर्तते तत्र जलम्? इति श्रुत्वा फेरुरकथयत्— न भेतव्यं मित्र। केवलं जानुदघ्नं वर्तते जलम्। परं शीतलं स्वच्छं मधुरं च। अहमत्र स्वैरमवगाहनसुखमनुभवामि। त्वमपि पिपासुरिव लक्ष्यसे। किं नागत्य मया सह शीतलस्य जल-स्यावगाहनं पानं च कृत्वा सुखस्य भागभाग् भवसि? आगच्छ, स्वागतं ते करोमि, सज्जनोऽसि त्वम्, मित्रं च। स्वल्पोऽपि ते समागमः मम सुखाय भविष्यति। सत्यं सतां साप्तपदीनमुच्यते।

इत्थं च मधुरमुखस्य पाषाणहृदयस्य तस्य फेरोः वचनानि श्रुत्वा छागः कूपेऽवातरत्। सत्वरं स फेरुः तस्य पृष्ठमारुह्य कूपाद् बहिर्भूत्वा सस्मितं छागस्य धन्यवादं व्याहृत्य लघुभिः पदैः वनमविशत्।

एवं चेह स्वार्थबुद्धयो दुर्जनाः सरलहृदयान् सज्जनान् वञ्चयन्ति। अत एव ते दूरादेव वर्जनीयाः सन्ति। इदमत्र युज्यते वक्तुम्—

यथा परोपकारेषु नित्यं जागर्ति सज्जनः।
तथा परापकारेषु जागर्ति सततं खलः॥

---

## स्वाधीन्यं परमं सुखम्

आसीद् गान्धारेषु वैदेहो नाम कश्चित् पोतवणिक्। स विदेशेषु वाणिज्यमकरोत्। स भारताद् बहूनि वस्तूनि क्रीत्वा सुदूरं पारे समुद्रमनयत्। तत्र च तानि विक्रीय स विपुलं धनमार्जयत्।

कदाचित् स भारतात् शुकमेकं क्रीत्वा स्वदेशमनयत्। स तं सौवर्णे पञ्जरे यदृच्छयाऽपालयत्। स तं विविधानि फलानि स्वादूनि द्विदलानि चाशयत्। सर्वोऽपि परिजनः तं प्रेम्णाऽपश्यत्। तथापि कीरः स नित्यं म्लानमुखोऽभवत्।

शुकः स व्यापारिणमपृच्छत्— 'स्वामिन् ! किं प्रापितो भवता मम संदेशो मे सजातीयेभ्यः ?'

व्यापारी—नूनं प्रापितः । तत्र वृत्तं श्रुत्वा कश्चित् तव सम्बन्धी मूर्च्छितो भूत्वा भूमौ अपतत् । स पञ्चत्वमगच्छत् ।

इत्थं च वैदेहस्य वचः श्रुत्वा स शुकः नेत्रे निमील्य शोकेन विषण्णवदनोऽजायत । ततो मूर्च्छां गतः सः पञ्जराजिरेऽपतत् । तदा वणिक् पालितस्य शुकस्य मृत्यौ नवामशोचीत् । ततः स तं मृतं मत्वा पञ्जराद् बहिः दूरमपातयत् ।

पञ्जरान्मुक्तः शुकः सत्वरमुड्डीय समीपस्थस्य वृक्षस्य शाखामविशत् । परमं विस्मितो वणिक्— किमिदं भोः ! इति तं पक्षिणं पर्यनुयोचत् । ततः स कीरः प्रत्यवादीत्— 'हे स्वामिन् ! पराधीनेन न जीवितव्यम्, यदि च स्वाधीन्यं कामयसे तर्हि मृतवत्पञ्जरे पत, जनः त्वां मृतं मत्वा पञ्जरबन्धाद् बहिः क्षेप्स्यति, तदा त्वं स्वतन्त्रो भविष्यसि ।' इति तस्य वृद्धस्य मम सम्बन्धिनः मदर्थे संकेतः आसीत् । इदानीमहं स्वाधीनोऽस्मि इत्युक्त्वा स शुकः आकाशमुदपतत् । ततो गगनादयं ध्वनिरभवत्—

घटं भिन्द्यात् पटं भिन्द्यात् कुर्यात् पर्वतरोहणम् ।
येन केन प्रकारेण स्वतन्त्रः पुरुषो भवेत् ॥

---

# इतो भ्रष्टास्ततो भ्रष्टाः

एकदा खगाः मृगाश्च राजानं चेतुं सभामकुर्वन्। 'राज्ञो भावे के गुणाः, तस्याभावे च के दोषाः' इत्यस्मिन् विषये तैः सर्वैः स्वे स्वे विचारा उपस्थापिताः आसन्। ततो व्याघ्रः—'सिंहोऽस्मासु बलवत्तरो वीरश्च अतः स पशूनामस्माकं राजा भवितुमर्हति' इत्यवादीत्। अन्येऽपि पशवः स्वैः स्वैः समर्थनैस्तमनुमुमुदिरे।

पशूनां प्रस्तावोऽयं खगेभ्यो न रुरुचे। ते कमपि विहङ्गममेव राजानं कर्तुं चकमिरे। तदा कश्चित् तित्तिरः उपस्थाय सिंहस्य राजपदेऽवस्थानं विरुरुधे। स आह—भवतु नाम सिंहः पशुषु बलवत्तरो वीरो वा, परन्तु स भूमौ एव शौर्यं कर्तुं प्रभुः, न स गगने चरित्वा किमपि कर्तुं समर्थः। आकाशात्तु पामरोऽपि पक्षी तस्य शिरसि चञ्चुप्रहारं कृत्वा तमवज्ञातुं शक्तो भवति। न सोऽस्माकं राजा भवितुमर्हः। अस्माकं तु स एव योग्यः यः पृथिव्यामाकाशेऽपि च समानं शौर्यं दर्शयित्वा सर्वथाऽस्मान् अनुशासने रक्षेत्। सर्वे पक्षिणस्तस्य कथनं समर्थयाञ्चक्रिरे।

ततः कुलिङ्गः उत्थायावादीत्—'श्येनोऽस्माकं राजा भवितुमर्हति। स शकुन्तेषु बलिष्ठः, उड्डीनकलाविशारदश्च। स गगने भूमौ चापि स्वैः खरैः नखैः हिंस्रैः पशुभिः योद्धुं प्रभवति'। सर्वे विहंगाः कुलिङ्गस्य प्रस्तावं प्रशशंसिरे।

पशवोऽस्मिन् प्रस्तावे सन्तुष्टा नाभवन्। ततः तेषां खगानां मृगाणां च मिथो मतभेदाः समुद्भवन्।

अस्मिन्नन्तरे जतूका एव तत्र तादृशा जन्तवोऽभवन्, ये स्वेषां खगत्वं मृगत्वं वा निश्चेतुमशक्ता आसन्। तेऽचिन्तयन्—'अहो किन्तु वयं खगाः, मृगा वेति? खगा इव वयं गगने चरामः, मृगाणां मातरः इव चास्माकं मातरोऽपि वत्सान् धापयन्तीति उभयोः नः साम्यम्।'

अथ खगमृगाणां रणः प्रारेभे। रणे प्रथमं पशुभिः महत् शौर्यं दर्शितम्। ते खगान् गृहीत्वा निर्दयं प्रजह्रुः। अनेके आहताः, बहवो मृताः, अन्ये च युद्धस्थलं विहाय पलायिताश्च।

जतूकास्तु पशूनां पक्षं विजयिनं वीक्ष्य, तेषां सेनापतिं सिंहं समुपेत्य प्रोचुः—'अहो यद्यपि वयं खे चरामः, तथापि न वयं खगानां सजातीयाः, यतोऽस्माकं वत्साः पशूनां वत्सा इव धयन्ति स्तनम्' इति। विजयिनः पशवः प्रमोदिनस्तान् जतूकानपि स्वजातीयेषु समाहरन्। पराजिताः पक्षिणो महतीं सभामकुर्वन्। मयूरः सभापतिरासीत्, शुकश्च मन्त्री। तत्र केकी सभापतिपदादूचे—'अहो! सम्भावितानामस्माकं जीवितानामेव यः पराभवः, स तु मरणादपि दुःसहः। 'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति भगवदुक्तेः। किं कर्तव्यम्, क्व गन्तव्यम्, कथं च जीवितव्यमस्माभिः?' इति इत्थं सभापतेः विलपितं श्रुत्वा प्रत्युत्पन्नमतिः शुकः सप्रसादः ईषन्मन्दमन्थरो स्वतीक्ष्ण तुण्डेन प्रोवाच—'अहो! जीवति खगाधिपे गरुडे कथमस्माकं

आर्तिः शोचेत् ? देवदेवस्य विष्णोः वाहनं स इदानीं सुरलोके विराजते। अस्माभिः सर्वैः भगवान् विष्णुः प्रार्थनीयः। स वैनतेयमस्माकं सेनापतिं विधाय नूनं नः साहाय्यं कारयिष्यति।

ततः सर्वे पक्षिणः समेत्य द्युलोकं गता विष्णुमुपतस्थिरे—

सशंखचक्रं सकिरीटकुण्डलं
सपीतवस्त्रं सरसीरुहेक्षणम्।
सहारवक्षस्थलकौस्तुभश्रियं
नमामि विष्णुं शिरसा चतुर्भुजम्॥

इत्थं च प्रार्थितः करुणावरुणालयो भगवान् विष्णुस्तेषामागमनप्रयोजनं पर्यपृच्छत्। ते च सर्वे स्वकीयं पराभवं विनिवेद्य भगवन्तं शरणं ययुः। तदा नारायणस्तेषां शरणागतानां साहाय्यं कर्तुं गरुत्मन्तं प्रेषितवान्। सोऽपि सत्वरमेव भूमौ समागत्य खगानां सैन्यसचिवोऽभवत्।

प्रारब्धं पुनर्युद्धम्। खगाः सत्वारम्भेण युयुधिरे। ते आकाशमार्गेण पशून् प्रजह्रुः। श्येनः प्रोड्डीनं विधाय पञ्चाननस्य नेत्रमस्फोटयत्। चिल्लः करीन्द्रमन्धमकरोत्। काको हरिणमतोदीत्। गृध्रो व्याघ्रमवधीत्। ततो गरुडः एकेनैवास्फालनेन सर्वानपि पशूनुड्डापयामास। बहवः पशवो हताः। केचिन्मृताः, अन्ये च भीताः सन्तः रणभूमिं विहाय प्रदुद्रुवुः। विजयः पक्षिणां पक्षे आसीत्। जतूकास्तेषां विजयं वीक्ष्य तानुपेत्योचुः—'अहो ! वयं युष्माकं सजातीयाः,

यद्यप्यस्माकं मातरः पशूनां मातर इव स्तनं पाययन्ति, तथाऽपि वयं यूयमिव गगनचराः स्मः।' परन्तु पक्षिणः तेषां वचनेषु विश्वासं न बबन्धुः। यतस्ते पूर्वं पशुभिर्मिलितान् तान् जानन्ति स्म। अचिराद् युद्धे खगा विजयिनो बभूवुः। रणो विरराम। ततो वैनतेयः खगानां मृगाणां च सन्धिं कारयामास। सर्वसम्मत्या च सिंहः पशूनां गरुडश्च पक्षिणां राजानौ प्रबभूवतुः। सर्वे खगाः मृगाश्च वैरं प्रविहाय मित्रभावमनुप्रापुः। ते महान्तमुत्सवमकुर्वन्। तत्र नृत्यं वादनं गानं हासाः विलासाश्चासन्। आसीत्तत्र भोजनगोष्ठी। जतूकाः तस्यां सम्मिलितुं समागच्छन्। ते च तत्रोभाभ्यां पक्षाभ्यां तिरस्कृताः आसन्। न केऽपि तान् स्वजातीयान् मन्यन्ते स्म। ततः पश्चात्तपन्तो लज्जिताश्च कुत्रापि तमोमये देशे आत्मानं संगोपाय्याधःशिरसः तिष्ठन्ति दिवा मुखं न दर्शयन्तः। हन्त! मूढास्ते पापस्य परिहाराय अद्यापि तपश्चरन्तीति मन्यामहे। कवयश्चैवं कथयन्ति—

पापाः पाखण्डिनो धूर्ता ये च मित्रेषु मायिनः।
इतो भ्रष्टास्ततो भ्रष्टास्ते लभन्ते दुरापदम्॥

---

## चौरः साधुतां प्राप्तः

आसीत् पुरा वाराणस्यां गदाधरभट्टो नाम विद्वान्। स धार्मिकः भगवद्भक्तश्चासीत्। तस्य गृहे एव पाठशाला आसीत्। परश्शतास्तत्र विद्या अध्येतुं तस्य गृहे समागच्छन्।

स सर्वानपि समागतान् शिष्यान् महता श्रमेण परमया प्रीत्या चापाठयत्। सर्वविधा आसन् तस्य शिष्याः। धनिनोऽधनाः सुधियः कुधियश्च। स सर्वानपि तान् समानभावेन अपश्यत्। सर्वेऽपि छात्राः तस्य भक्ता अभवन्, गुरुसेवातत्पराश्च। धनवन्तो धनं दत्त्वा गुरुसेवामकुर्वन्, अधनाश्च शारीरिकश्रमेण तस्य सेवामकुर्वन्।

गदाधरः महान् भक्तः आसीत्। अध्यापनानन्तरं स भगवतः भजनं सेवनं पूजनं चाकरोत्। तस्य गृहे भगवतः लघुमन्दिरमासीत्। तत्र बालकृष्णस्य मूर्तिरभवत्। तस्य भार्या अपि सदैव भगवतः सेवायां सहायिका संलग्ना चाभवत्। शिष्याः भक्ताश्चान्येऽपि लोका भगवतः सेवायां गदाधरभट्टस्य सहायका अभवन्। बहवो धनाढ्या धनराशीन् उपानयन्। तदा स भगवतो बृहन्मन्दिरं विशालं भवनं चाकारयत्। भगवतः कृपया स धन्योऽभवत्। भट्टस्तु साधुस्वभावः परमो दयालुः धनाढ्यः सन्नपि कामपि विक्रियां नागच्छत्। स सदैव विद्यार्थिनां दरिद्राणाम्, रुग्णानामन्धानाम्, पंगूनाम् अन्येषां च तथाविधानां दुर्विधानां सहायतामकरोत्।

एकदा रात्रौ कश्चित् चौरः तस्य भवनमविशत्। स धनस्य पोट्टलीं बद्ध्वा नेतुमैच्छत्। परन्तु पोट्टली बृहती भारवती चाभवत्। स तां स्कन्धेन उद्धर्त्तुं नापारयत्, शिरसि धर्त्तुं चापि न समर्थोऽभवत्।

एतस्मिन्नन्तरे भक्तप्रवरो गदाधरो लघुशङ्कां कर्तुं शयनाद् उदतिष्ठत्। स तस्य चौरस्य कष्टां दशां वीक्ष्य दयार्द्रचितोऽभवत्, अकथयच्च मधुरया वाचा—'हे मित्र! अहं ते उत्थापयामि भारमिमम्। मा भैः, नय सुखेनेमम्। जानामि तव धनस्य परमावश्यकता वर्तते' इति।

चौरः गृहस्वामिनं दृष्ट्वा पलायितुमैच्छत्। परन्तु भट्टस्य आश्वासनैः स कथंचित् वीतभयोऽभवत्। साधुस्वभावो भट्टमहाशयः तां पोट्टलिकां तस्य शिरसि धारयित्वा—'क्षम्यतां मित्र! कष्टम्, अस्मिन् निशीथे त्वमत्रागत्य परिश्रान्तोऽसीति।'

चौरः लज्जितोऽजायत। स तां पोट्टलीं नेतुं नैच्छत्। भट्टपादानामाग्रहेण स कथंचित् तामादाय स्वगृहमुपागच्छत्। तस्य हृदयं परिवर्तितमासीत्। स प्रातरेव तां पोट्टलीं पुनः समादाय गदाधरस्य गृहं समागच्छत्। अपतच्च भट्टमहानुभावस्य चरणयोः। तस्य नेत्राभ्यामश्रुधाराऽवहत्। तस्य चित्तं शुद्धमभवत्। ततः परं स साधुचरित्रोऽभवत्। स श्रमेण जीवनवृत्तिं निरवहत्। स भगवतो भक्तोऽभवत्। साधूनां सङ्गेनासाधवोऽपि साधवः संजायन्ते, इति निदर्शनमिदम्। इदमत्र युज्यते वक्तुम्—

महाजनस्य संसर्गः कस्य नोन्नतिकारकः।
गदाधरस्य सङ्गेन चौरः साधुत्वमागमत्॥

---

# दुष्करो लोकपरितोषः

अस्ति किल मालवेषु श्रीरामपुरं नाम ग्रामः। तत्र दृढकुम्भो नाम कुलालः प्रतिवसति स्म। तस्य रासभी पुंशावकमददात्। वर्षयुगलेन स रासभशिशुः यौवनमवाप्नोत्। स दृढः पीनो वोढा चाभवत्। परन्तु दुर्गतः कुलालः तं विक्रेतुमैच्छत्। एकस्मिन् दिने स तं गर्दभमादाय पुत्रेण सह विपणिं प्रातिष्ठत्। कुमारं सुकुमारं सुतं युवानं रासभं च पुरस्कृत्य यावत् स कुलालो नातिदूरमगच्छत्, तावदेव तं कश्चिन् मानुषोऽपश्यत्। सोऽवदत्—अहो! निर्बुद्धिरयं कुम्भकारः। यो मध्याह्ने इदानीं प्रचण्डे तपति भास्करे सन्तप्तधूलौ मार्गे पादचारी व्रजति, गर्दभं च स्वकीयमनारोपितभारं नयति। अत एव—'प्रोच्यमानः कुम्भकारो गर्दभं नारोहति' इति लोकप्रवादः प्रवर्तते इति मन्ये।

इदमाकर्ण्य कुलालः पुत्रं गर्दभस्य पृष्ठे समावेशयत्। ततो नातिदूरे एव खरस्य पृष्ठमारूढं पुत्रं पितरं चानुपानद्भ्यां पादाभ्यां प्रयान्तमवलोक्य कश्चिद् भद्रवेषो मानुषः—अरे! शालावटो! भृशं मूर्खोऽसि त्वम्, यस्य वृद्धः पिता दण्डं गृहीत्वा पद्भ्यां याति, स त्वं युवा खरमारुह्य सगर्वः चरसि। विचारमूढोऽसि खलु। अथवा कलिकालस्य माहात्म्यमिदम्। न साम्प्रतं मातापितरौ गुरून् वा पूजयन्ति पुत्राः। अपन्थानं प्रयायिनः सन्तीदानीन्तना अव्यावहारिकाः सन्ततयः, इत्यवादीत्।

एतच्छ्रुत्वा स वृद्धः पुत्रं खरपृष्ठाद् उत्तार्य स्वयमारूढोऽभवत्। ततो गच्छन्तस्तेऽपरं कंचन ग्रामं प्राप्नुवन्। तत्र जनाः कुमारं सुतं पद्भ्यां चलन्तं पितरं च खरपृष्ठस्थितं वीक्ष्य हसन्तः प्रावोचन्—'अहो निष्करुणोऽयं कुलालः, यस्य सुकुमारः सुतः सन्तप्तवालुके पथि पद्भ्यां, चलति स्वयं स गर्दभयानेन याति। 'मन्दबुद्धयो जायन्ते जरठाः' इति नासत्यं कथयन्ति लोकाः।

इत्थं च प्रजल्पतां भिन्नरुचीनां जनानां वचनेन लज्जितो वृद्धः पुत्रमपि गर्दभस्य पृष्ठे समावेशयत्। ततो रासभस्य पृष्ठमारूढौ द्वावपि तावन्यं कंचित् ग्रामं प्रापतुः। तत्र तथावस्थौ तावयलोक्य कश्चिन् नापितः—किं भोः प्रजापते! तवायं स्वकीयो गर्दभः, अथवा अन्यस्य कस्यापि? इति स्थविरमपृच्छत्। स तु सविस्मयोऽवदत्—अरे! अत्रापि वर्तते सन्देहः? मया पालितायाः रासभ्याः एष प्रसूतिः। अयं मया पोषितः आशैशवात्, कथमन्यदीयो भवितुमर्हति' इति।

इदमाकर्ण्य स नापितः पुनराह—अरे! इत्थं यदि चेत्, तर्हि कथमेनं वराकं युगपदेव समारूढौ युवां मारयितुमिच्छतम्? अयमधुना युवयोः भारेण मृतकल्पो जातः। तर्हि किं न वहतं स्कन्धाभ्यामेनं किञ्चिद्दूरम्। एषोऽयं पञ्चत्वं प्रयाति। अनेन ते महती हानिः, प्राणिवधे दोषः, लोके उपहासश्च भविष्यति।

इत्याकर्ण्य द्वावपि तौ गर्दभाद् अवतीर्य तस्य चरणान् रज्ज्वा बद्ध्वा, अन्तराले च वंशं विनिवेश्य, तं स्कन्धयोः

निधाय मार्गे समापतितायाः नद्याः सेतोः उपरिष्टाद् गृहं प्रतिनिवर्तमानौ अभवताम्। तत्र तथा गर्दभं वहन्तौ तौ वीक्ष्य जनाः सतालं जहसुः। तेषां च कोलाहलेन भीतः गर्दभः बलात् पश्चाद् पादौ पातयन् किञ्चित् शिथिलबन्धो नद्यामपतत्। तौ अपि च खरस्य रक्षार्थिनौ तदनु तत्र पतितौ कथमपि लोकैः त्रातौ गृहमगच्छताम्। तदा पश्चात्तपन् कुलालः पद्यमिदमपाठीत्—

सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः।
विद्यते न खलु कश्चिदुपायः सर्वलोकपरितोषकरो यः॥

---

## सिंहमूषकयोर्मैत्री

कस्मिंश्चिद् वने कोऽपि सिंहः आसीत्। स दिवा गुहायां शयानो निद्रामभजत्, रात्रौ च स वने भ्रमन् बहून् वनेचरान् पशून् अमारयत्। वनेषु चरन् यदा स उच्चैः अगर्जत्, तदा सर्वे पशवः पक्षिणश्च विरावान् कुर्वन्तः इतस्ततोऽधावन्। वन्याः वारणाः व्याघ्राः वराहाः भल्लुकाः वृकाः गवयः हरिणाः महिषाः जम्बुकाः मर्कटा अपि च तस्माद् भीता आसन्। स पशूनां राजा अभवत्।

एकदा ग्रीष्मे प्रचण्डे तपति भास्करे स सिंहः कस्यचित् महावृक्षस्य शीतलायां छायायां निद्राणोऽभवत्। वृक्षस्य मूले

मूषकाणां बिलानि आसन्। कश्चिन् मूषकः बिलान्निःसृत्य सिंहस्य कोमलेषु केशरेषु लीलयालुण्ठत्। तेन सिंहस्य निद्राभंगोऽभवत्। प्रबुद्धः सिंहः भीषणं गर्जनमकरोत्। मूषकःभयेन पलायितुमैच्छत्। परन्तु साध्वसेन शूनपादः स पदमपि गन्तुं नाशक्नोत्। मृगेन्द्रोऽग्रपादेन तमगृह्णात्। स तं हन्तुमुद्यतोऽभवत्।

तदा स मूषकः कम्पमानेन चामेण स्वरेण मृगराजं प्रार्थयत्—हे मृगेन्द्र! भवान् जांगलानां जीवानामस्माकं राजा। को न जानाति भवतः पराक्रमान्। सर्वे वनचराः पूजयन्ति भवन्तम्। अहमस्मि क्षुद्रो मूषकः कृतापराधश्च। क्षमतां कृपया ममापराधम्, मा वधीः माम्, निधत्तां मयि दयादृष्टिम्। कृपालवो भवन्ति महान्तः उदारचरिताश्च—

विकृतिं नैव गच्छन्ति क्षुद्रदोषेण साधवः।
आवेष्टितं महासर्पैः चन्दनं न विषायते॥

अथवा, अहमपि भवतः साहाय्यं जातु कर्तुं शक्तो भविष्यामि। इह दशानां परिवर्तनात्, 'शकटा नौषु, नावश्च शकटेषु' प्रयान्तीति जानन्त्येव तत्रभवन्तः।

इत्थं च पञ्चाननो मूषकस्य वचनं निशम्य कदायं मम साहाय्यं कर्तुं शक्तो भविष्यतीति मन्दस्मितं विधाय तममुञ्चत्।

सिंहेन मुक्तो मूषकः, प्रपलाय्य बिलमविशत्। मृगपतिश्चापि पुनः निर्बाधं निद्रासुखमविशत्।

बहूनि दिनानि व्यतिक्रान्तानि विस्मृतिपथमगच्छन् तयोः

मित्रतायाः कारणम् । एकस्मिन् प्रभाते आखेटिनः तं वनोद्देश-मागच्छन् । ते सिंहस्य बन्धनाय जालमतन्वन् । सोऽपि चाजानानः तस्मिन् जालेऽपतत् । स तत्र बद्धोऽभवत् । बलवत्तरोऽपि मृगेन्द्रस्तं जालं भेत्तुं नापारयत् । क्रुद्धः स प्रोच्चैराक्रोशत् ।

तदा बिलस्थो मूषकस्तस्याक्रोशं श्रुत्वा बहिरागच्छत् । स पाशनिबद्धं मृगराजमपश्यत् । स झटित्येव तमुपेत्य प्रियं वचनमवादीत्—भोः महाराज ! न भेतव्यं भवता । एषोऽस्मि भावत्को दासो जालमिदं छेत्तुमुपस्थितः । अहं हि पाशादस्माद् भवन्तं मोक्ष्यामि ।

इत्युक्त्वा स मूषकः तीक्ष्णतरैः स्वदन्तैः जालं छेत्तुं प्रारभत । स्वल्पैरेव क्षणैः स जालमकृन्तत् । सिंहो बन्धान्मुक्तोऽजायत । स तमभिनन्द्यावादीत्—उन्दुरश्रेष्ठ ! त्वं मम दुःखे साहाय्यकरोऽसि । त्वया मम प्राणा रक्षिताः । अद्य प्रभृति त्वं मे कारणमित्रमसि । प्रियतमोऽसि मे त्वम् । अहं तव कृतज्ञोऽस्मि । त्वां दृष्ट्वाऽहमानन्दमनुभवामि । ततः स सिंहः पद्यमिदमपाठीत्—

मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः
यत्पात्रं सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् ।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलाः
ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥

# मनस्वी मृगनन्दनः

आसीत् पुरा कोशलेषु ब्रह्मदत्तो नाम नृपतिः। स आखेटव्यसनी अजायत। स मृगयार्थं शुनां श्येनानां व्याधानां भिल्लानां श्वपचानां हयानां रथानां च महतीं सेनामकरोत्। नगरवासिनो जना अपि मृगयां प्रस्थितं तमनुगच्छन्ति स्म। स नित्यं बहूनां वन्यपशूनां पक्षिणां मत्स्यानां च महान्तं संहारमकरोत्।

आसीत् तदानीं नातिदूरे वाराणस्या मृगदावं नाम महारण्यम्। यदिदानीं सारनाथः इति नाम्ना प्रसिद्धं तीर्थम्। तस्मिन् वने कौचित् सुखिनौ मृगदम्पती आस्ताम्। तयोः नन्दनो नाम प्रसूतिः। पशुरपि स स्वेषां परेषां च नन्दनः दयालुः धीरः बुद्धिमान् चाभवत्।

दयार्द्रचेताः स निरपराधिनां खगमृगमत्स्यानां तेषां नित्यं संहारं वीक्ष्य घृणयार्द्रद्रवितचित्तो व्याकुलश्चोपायमचिन्तयत्। स वन्यानां पशूनां पक्षिणां मृगाणां च सभामाहूतवान्। तत्र मिलितैः सर्वैरपि तैः नृपस्यान्यास्ये स्वे स्वे विचारा उपायाश्चोपस्थापिताः। अन्ततश्च गत्वा 'अस्माकं मध्यात् नित्यमेकेन पशुना खगेन च मांसार्थिनो राज्ञः मृगव्याहेतोः स्वयमेवोपस्थातव्यम्। येन सर्वेषामस्माकमेकपदे विनाशो न सम्भवेत्' इति तैः निर्णीतम्।

ततश्च तैः [redacted] प्रस्तावो दूतमुखेन नृपाग्रे उपस्थापितः। राजापि तम् 'उचितम्' इति स्वीकृत्य मृगयासंहाराद् व्यरमत्।

ततः प्रतिदिवसमेकः पशुः विहगश्च नृपस्य मन्दिरं स्वयमुपातिष्ठताम्। तदा अन्ये च वन्याः पशवः पक्षिणश्च सुखेनाजीवन्।

बहूनि दिनानि व्यतीतानि। एकदा नन्दनस्य वारः समायातः। स परमया प्रसन्नतया औदार्येण च राज्ञे आत्मसमर्पणमकरोत्। तस्य मनस्वितया नृपः प्रभावितोऽभवत्। स तं हन्तुं न शक्नोति स्म। स स्वस्य धनुषि शरसन्धानं कर्तुं न प्राभवत्। तदा स नन्दनः—हे राजन्! कस्मात् मां त्वरितं न हन्ति भवान्? अनया मम देहसम्पत्त्या परेषामुपकारो मेऽभीष्टः। अन्यथापि नश्वरमिदं मे शरीरं नंक्ष्यत्येव। कथमनेनाऽनित्येनान्येषां तृप्तिं न संपादयित्वा नित्यं पुण्यं नार्जयामि। कृपया शीघ्रमेव मां हत्वा विधेहि पुण्यस्य भाजनम्।

इत्थं च पशोस्तस्य वचनमाकर्ण्य मानुषं हृदयं सदयं सलज्जञ्च भूत्वा परिवर्तितमभवत्। तदा स राजावादीत्—हे मृगराज! त्वं गृहं गच्छ। त्वं धर्मात्माऽसि, त्वं गुणवानसि, नाहं त्वां हन्तुं प्रभुः। अभयं ते प्रयच्छाम्यहम्।

इति राज्ञो वचः समाकर्ण्य मृगनन्दनः स प्रार्थयत्—हे राजन्! यथा भवान् मह्यमभयं ददाति, तथैवान्येभ्योऽपि मे बन्धुभ्यो न दास्यति किम्?

राजा—अवश्यमेव दास्यामि ।

मृगनन्दनः—तर्हि देहि, इति अहं प्रार्थये ।

ततः स राजा भेरीनादेन सर्वत्र वने खगानां मृगाणां चाभयदानस्य घोषणामकारयत् । सर्वे खगा मृगाश्च राज्ञोऽभयदानस्य घोषणां श्रुत्वा प्रसन्नाः सन्तः मृगनन्दनस्य धैर्यप्रशंसामकुर्वन् । ततस्ते सुखेनाऽजीवन् । इत्थं च मनस्विनो धीराः स्वयं जीवन्ति जीवयन्ति चान्यान् । कवयश्चेत्थं नन्दनस्य प्रशंसामकुर्वन्—

सह परिजनेन विलसति धीरो गहनानि तरति पुनरेकः ।
विषमेकेन निपीतं त्रिपुरजिता सह सुरैरमृतम् ॥

---

## दुर्जनेन समं सख्यं न कुर्यात्

---

कौचित् श्येनकुक्कुटौ मित्रे आस्ताम् । तौ प्रत्यहं मिलतः स्म, प्रियाणि जल्पतः स्म, दत्तः स्म, आददाते स्म, भोजयते स्म च परस्परम् ।

एकदा श्येनः कुक्कुटमवादीत्—हे मित्र ! तव जातिः अतीव अकृतज्ञा, अविनीता चास्ति ।

कुक्कुटः—अये ! कथमेवं कथयसि त्वम् ? केन प्रकारेण वयमविनीताः अकृतज्ञाश्चेति त्वया लक्षिताः । कृपया कथयस्व माम् ।

श्येनः—अस्तु, कथयामि, शृणु त्वम् । पालकाः मानुषाः युष्माकं कृते यवान्, गोधूमान्, तण्डुलानि धान्यानि बहुविधानि

बीजानि च किरन्ति, ओदनं रोटिका मत्स्यानपि च भोक्तुं ददति युष्मभ्यम्। ते समये समये जलमपि पाययन्ति युष्मान्, रक्षन्ति च चिल्लश्येनबिडालकुक्कुरगोमायुभ्यः। ते निजावासेषु वसतिं ददति वः, दर्शयन्ति च बहुधा युष्मासु स्नेहम्।

यूयं तु कुक्कुटजातीयाः प्रत्युपकारं, स्नेहं, मैत्रीं, स्वामिषु भक्तिं वापि नाम्नापि न जातु दर्शयथ। अपि तु वैरमाचरथ, पलायध्वं वापि च तान् विहाय यथाऽभिलाषम्। नीचाः खलु यूयम्।

उपकारोऽपि नीचानामपकाराय कल्पते।
पयःपानं भुजङ्गानां केवलं विषवर्धनम्॥

अस्माकं श्येनानां जातिस्तु क्रूरेष्वपि पालकेषु जनेषु प्रीतिं प्रतीतिं नीतिं च दर्शयति। ते स्वाधीन्येन वने विहरतोऽस्मान् पाशेन बध्नन्ति। ततस्तेऽस्माकं नेत्राणि बद्ध्वा बहुतिथं कालं लङ्घयन्ति विवर्जयन्ति च नो निद्रासुखम्। शिक्षणसमयेऽपि ते निर्दयं दण्डयन्ति नः। ततस्तेऽस्माकं नेत्रबन्धनं मुञ्चन्ति ददति च भोक्तुं शनैः शनैः स्वल्पां पललमात्राम्। ततस्तु ते लब्धपरिचयेष्वप्यस्मासु विश्वासमकुर्वाणाः रज्ज्वा पादयोः बद्ध्वा काके कपोते तित्तिरे वा मुञ्चन्ति नः। बुभुक्षितास्तु वयं यावत् स्वाखेटं धृत्वा भोक्तुं प्रवर्तामहे, तावदेव स्वामी समागत्यास्माकं भोज्यम् अपाहरति। पालकानामस्माकमेष व्यवहारः चिरं प्रवर्तते।

ततश्च सम्यक् शिक्षितानामस्माकं पादेभ्यः स्वामी रज्जुं छिनत्ति, उड्डापयति चास्मान् गगनेऽन्वाखेटम्, स्वयं भूमौ धावत्यश्ववारः। तदापि सुदूरमाकाशे उत्पतन्तोऽपि झटित्येव

स्वामिनं प्रति निवर्तामहे स्वामिभक्ता वयम्। अनेन व्यवहारेण कीदृशाः स्वामिभक्ताः स्मः श्येना वयमिति सर्वथा ज्ञातुं योग्योऽसि त्वम्।

कुक्कुटस्तु श्येनस्येदं वचः श्रुत्वा साट्टहासं जहास। श्येनस्तु भोः! किं मयात्र किमप्यसत्यमनुचितं वापि कथितम्, येन प्रोच्चैः अट्टहासं करोषि त्वम्?

ताम्रचूडस्तु—अस्मिन् विषये त्वं न किमपि जानासि, इति हसामि, इत्यवदत्।

कस्तेऽभिप्रायः? इति श्येनः प्रत्यपृच्छत्।

कृकवाकुः—श्रूयतां भोः! यदा तु युष्माकं पालकः नित्यं युष्मास्वेकतमं गृहीत्वा स्थाल्यां तैलेन पक्त्वा शाकमिव भक्षयेत् तदा किं कुर्युः युष्माकं सभ्याः सजातीयाः? किं ते नापसरेयुः प्राणरक्षार्थं विहाय कुस्वामिनम्?

श्येनः—अवश्यमपसरेयुः, विहाय तादृशं किंप्रभुम्। कृतघ्नास्ते दुर्जनाः, ये पालितानपि स्वयं घ्नन्ति। परित्यक्तव्या एव खलाः खलु युष्माभिः सुदूरात्। इदमत्र युज्यते वक्तुम्—

दुर्जनेन समं सख्यं प्रीतिं चैव न कारयेत्।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम्॥

---

# न तु पुष्टविपुष्टयोः

पुरा प्रशस्तपादो नाम नृपः पाञ्चालदेशं शास्ति स्म। द्रुपदः तस्य कनिष्ठः पुत्र आसीत्। स बुद्धिमान् स्वस्थः विनीतश्चाभवत्। पिता तं प्रसिद्धेभ्यः गुरुभ्यः शास्त्राणि पाठयति स्म। तदानीं मुनेः भारद्वाजस्य धनुर्वेदाचार्येषु महती प्रसिद्धिरभवत्। नृपालः पुत्रमादाय मुनेराश्रमपदं समुपागच्छत्। स मुनिं प्रणिपत्य राजपुत्रस्याध्यापनाय प्रार्थयत्। मुनिरपि प्रीतः नृपतेः प्रार्थनां पूजयन् राजकुमारस्य शिक्षाभारं वोढुमभ्युपागच्छत्।

मुनेः भारद्वाजस्य द्रोणो नाम आत्मजः आसीत्। आश्रमे सह वसतोः खादतोः पिबतोः पठतोश्च द्रोणद्रुपदयोः सुगाढा मैत्री अभवत्। मुनेः तयोः समाना प्रीतिरासीत्। द्वौ अपि तौ शास्त्रेषु अस्त्रविद्यासु च निपुणौ अजायताम्। द्रुपदः स्वगृहमगच्छत्। स पितुः स्थाने राजाऽभवत्। द्रोणोऽपि स्वपितुः आश्रमे कुलपतिरासीत्।

ततः कृतपरिग्रहो द्रोणाचार्यः आश्रमे वसन् बहुतिथं कालं निनाय। अनन्तरं च दशानां परिवर्तनात् धनस्य क्षये कलत्रात् संजातपराभवः सोऽर्थकृच्छ्राणि अनुभवन्—

व्याधितस्यार्थहीनस्य देशान्तरगतस्य च।
नरस्य शोकदग्धस्य मित्रदर्शनमौषधम्॥

इत्यचिन्तयत् । स राजानं पूर्वमित्रं द्रुपदं द्रष्टुं पाञ्चालराजधानीमुपागच्छत्, अपश्यच्च मित्रं युवराजं द्रुपदम् । परन्तु द्रुपदस्तु न पूर्वतनः छात्रः द्रुपद आसीत्, स तु राज्यलाभेन संजातगर्वो धनान्धो विलक्षण एवाभवत् । तस्य तु—

भक्ते द्वेषो जडे प्रीतिररुचिर्गुरुलंघनम् ।
मुखे च कटुता नित्यं धनिनां ज्वरिणामिव ॥

अजायत । स तु दरिद्रस्य द्रोणाचार्यस्य परिचयमपि न मन्यते स्म । साहाय्यकरणस्य तु कथैव कासीत् । स आचार्यस्य गौरवमवगणयन् नकारस्य प्रकारान् प्रयुंक्ते स्म । अनेन द्रुपदस्य राज्ञः व्यवहारेण द्रोणाचार्यः तेन सह वैरमन्वबध्नात् ।

ततो द्रोणाचार्यः इन्द्रप्रस्थमयासीत् । भीष्मपितामहस्तं पाण्डवानां कौरवाणां च शस्त्रविद्यागुरुमकरोत् । यदा च पाण्डवाः शस्त्रविद्याः समाप्य गुरुदक्षिणां दातुं गुरुम्—'का दक्षिणा भवते देया' इति प्रार्थयामासुः, तदा सः 'ममावमानिनं द्रुपदं बद्ध्वा आनीयताम्' इत्यादिशत् । पाण्डवा गुरोराज्ञया द्रुपदं बद्ध्वा तस्याग्रे उपस्थापयाञ्चक्रुः । तथापि परमः दयालुः द्रोणाचार्यः तस्यार्धराज्यमपहृत्य जीवन्तमेवामुञ्चत् ।

इत्थं च पराजितस्य द्रुपदस्यावमानना हृदयमस्पृशत् । स द्रोणस्य प्रतिहिंसार्थं उपायान् अकरोत् । ततः सः—'शत्रुपराभवकरो मे पुत्रो भूयाद्' इति कामनया पुत्रेष्टिं नाम यज्ञमकरोत् । दैवप्रसादाद् यज्ञाग्नेः कुमारो धृष्टद्युम्नः कुमारी द्रौपदी च अजायेताम् ।

ततो गच्छति काले कुमारी द्रौपदी युवतिः बभूव। राजा तां पाण्डवेभ्यो ददौ। कुमारो धृष्टद्युम्नोऽपि सर्वासु विद्यासु कलासु च लब्धनैपुण्यः यौवनं प्राप। स सर्वानपि पितुः शत्रून् विजित्य पाञ्चालराजस्य परां प्रतिष्ठां स्थापयाञ्चकार। ततः प्रवृत्ते महाभारतीये युद्धे धृष्टद्युम्नः सशाठ्यं द्रोणाचार्यस्य वधमकरोत्। तदत्रानेन कथायोगेन पुष्टविपुष्टयोः मैत्री न कल्याणाय भवतीति प्रोक्तम्।

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोः मैत्री विवाहश्च न तु पुष्टविपुष्टयोः॥



## कुशलः काकः

कश्चित् काकः आसीत्। स पिपासुः अभवत्। जलार्थी स इतस्ततः अभ्राम्यत्। स कुत्रापि जलं न लभते स्म। पिपासया क्षामकण्ठः स एकम् उद्यानम् अविशत्। तत्र स जलेन पूर्णं कुम्भम् अपश्यत्। स तस्य उपरि उपाविशत्। स पानीयं पातुम् ऐच्छत्। परन्तु घटे स्वल्पं जलम् अभवत्। स घटस्य तले स्थितम् उदकम् लब्धुं न अशक्नोत्। स निराशः अभवत्। तथापि स धैर्यं नामुञ्चत्। स प्रयत्नम् अकरोत्। स घटं परिवर्तितुं प्रयतते स्म। घटः गुरुः आसीत्। स महान् आसीत्। काकः

तस्य परिवर्तने न प्राभवत्। स एकां युक्तिम् अचिन्तयत्। स तस्मिन् घटे लघूनि प्रस्तरखण्डानि प्राक्षिपत्। प्रस्तराणां क्षेपेण जलं घटस्य कण्ठदेशे समागच्छत्। ततः स काकः जलमपिबत्। स स्वस्थोऽभवत्। अहो! रक्षिताः प्राणा इति स अकथयत्।

इत्थं च चतुरः स काकः स्वस्य कौशलेन आत्मनः प्राणान् अरक्षत्। छात्राः! युष्माभिरपि सदैव प्रयत्नपरैः कौशलेन धैर्यं धरणीयम्, बुद्ध्या प्रवर्तितव्यम्, शक्त्या सोढव्यम्, पराक्रमेण च परिक्रमणीयम्। इत्थं निस्संशयं सफलमनोरथाः भविष्यथ यूयम्। उद्यमपराणामेव दैवं साहाय्यं करोति। यथोच्यते—

उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः।
षडेते यत्र वर्तन्ते तत्र दैवः सहायकृत्॥

---

## भेदः कार्यविनाशाय



पुरा धारायां कश्चिद् विद्वान् ब्राह्मण आसीत्। स कदाचिद् धारेश्वरस्य सभां गतः, 'कविरस्मि, नृपालं द्रष्टुं कामये' इति द्वारपालं न्यवेदयत्। द्वारपालोऽन्तः प्रविश्य द्विजस्यागमनं राजानमसूचयत्। अनुमतप्रवेशः सोऽपि आशिषो व्याहृत्य आसने उपाविशत्। राजा तं पूजयित्वा—'गगनं भ्रमरायते' इतीमां समस्यां पूरयितुं प्रार्थयत्। सोऽपि च क्षणं चिन्तयित्वा—

स्वस्ति श्रीभोजराजाय जगद्देवाय भूभुजे।
यद्यशःपुण्डरीकान्तर्गगनं भ्रमरायते॥

इत्यपाठीत्। राजा तु परमः प्रीतः तस्मै रूप्यकाणां सहस्रमेकं सवत्सं धेनुयुगलं चायच्छत्। ततः [redacted] विप्रः रूप्यकाणां पोट्टलीं धेनू च ते गृहीत्वा स्वगृहं प्रातिष्ठत्। मार्गे कश्चित् चौरः तस्य धनपोट्टलीं धेनू चापश्यत्। स विप्रस्य धनं धेनू च चोरयितुं मतिमकरोत्। स तं विप्रमन्वसरत्। ततो नातिदूरं प्रयातान् तान् कश्चिद् बुभुक्षितो राक्षसो न्यभालयत्, ऐच्छच्च तं युवानं पीनं ब्राह्मणं खादितुम्। सोऽपि तानन्वगच्छत्। गोधूलिवेलायां ब्राह्मणः स्वगृहमविशत्। मन्दान्धकारे प्रदोषसमये चौरः राक्षसश्चापि विप्रस्य गृहमविशताम्। चौरः गोष्ठस्य कोणेऽतिष्ठत्, राक्षसोऽपि पुनस्तमेव कोणमुपागच्छत्। ब्राह्मणो धनं पेटिकायां न्यदधात्। धेनू

च दुग्ध्वा पायसं कर्तुं भार्यामवादीत्। ततस्तौ दम्पती भोजनं कृत्वा भोजराजस्य औदार्यविषयिकीं बहुविधां चर्चामकुर्वाताम् अगच्छतां च दशवादनसमये शयनागारम्। प्रसुप्तयोः तयोश्चौरः—'कस्त्वम्' इति राक्षसमपृच्छत्। सोऽपि च 'राक्षसोऽहं ब्राह्मणं खादितुमागतोऽस्मि' इत्यगदत्। चौरोऽपि च स्वपरिचयम्, आगमनप्रयोजनं च राक्षसं तमकथयत्। स तं राक्षसमवादीत्—

भोः राक्षस! पश्य, अहमत्र प्रथममागतोऽस्मि, तदहं स्वकार्यं त्वत्तः प्राक् साधयितुमर्हामि। यावदहं विप्रस्य धनं धेनुं च हरामि, तावत्त्वमत्रैव कोणे तूष्णीं तिष्ठ। त्वया प्राग् गृहीतोऽयं ब्राह्मणः प्रबुद्धो मम कार्येऽवश्यं करिष्यति विघ्नम्, अतो मौनाय कुरु प्रसादम्। इदं चौरस्य वचः श्रुत्वा क्रुद्धो राक्षस आह—

मैवं हराम्यहं पूर्वं विप्रं नोचेद् वृथा मम।<br>
भवेद् गोखुरशब्देन प्रबुद्धेऽस्मिन् परिश्रमः॥

इत्यवादीत्।

एवं च तयोः कार्यसिद्धौ मतभेदः समजायत। ततः कलहायमानौ तौ मिथः प्राहरताम्। तं च प्रहारशब्दं निशम्य ब्राह्मणोऽबुध्यत। स कृपाणं गृहीत्वा तं राक्षसं चौरं चापि हन्तुमन्वधावत्। भीतौ च तौ द्वावपि प्रपलाय्य प्राणान् अरक्षताम्।

इत्थं च मिथो मतभेदाज् जनानां कार्याणि न सिद्ध्यन्ति।

इदमत्रोच्यते—

नूनं परस्परं भेदो विवादः कलहोऽपि वा।<br>
कार्यसिद्धेर्विनाशायाभद्रायासुकृताय च॥

---

# पापस्य हेतुर्लोभः



आसीत् कस्मिंश्चिद् अधिष्ठाने हरिदत्तो नाम ब्राह्मणः। स श्रमेण कृषिं करोति स्म। तथाऽपि सदैव तस्य कालो निष्फलोऽगच्छत्। अथैकस्मिन् दिवसे स परिश्रमेणार्तः घर्मेण प्रतप्तश्च स्वक्षेत्रमध्ये क्षणं वृक्षच्छायायामस्वपत्। सुप्तोत्थितः स वृक्षस्य मूले वल्मीकोपरि प्रसारितफणं भीषणं भुजङ्गं दृष्ट्वाऽचिन्तयत्— 'नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता, तेनेदं मे कृषिकर्म विफलं भवति। तदहमस्याः पूजामद्य करिष्यामि।' इत्यवधार्य स गृहं गत्वा क्षीरमानयत्। ततस्तद् एकस्मिन् शरावे निक्षिप्य वल्मीकस्यान्तिकं गत्वाऽवादीत्— 'भोः! क्षेत्रपाल! मयैतावन्तं कालं न ज्ञातम्, यत्त्वमत्र निवससि, तेन तव पूजा न कृता, तत्क्षमस्व साम्प्रतम्।' एवमुक्त्वा स दुग्धं निवेद्य पुष्पाणि च वल्मीकमुखे विकीर्य गृहाभिमुखं प्रायात्।

अन्यस्मिन् प्रभाते यावद् आगत्य पश्यति, तावद् दीनारमेकं शरावे दृष्टवान्। एवं च स प्रतिदिनमेकाकी समागत्य सर्पाय तस्मै क्षीरं ददाति, गृह्णाति चैकैकं दीनारम्।

अथैकस्मिन् दिवसे वल्मीके क्षीरानयनाय पुत्रं नियुज्य स ब्राह्मणो ग्रामान्तरमगच्छत्। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च, पुनः गृहं प्रत्यागच्छत्। अन्यस्मिन् दिने स तत्र गत्वा दीनारमेकं दृष्ट्वा गृहीत्वा चाचिन्तयत्— 'नूनं सौवर्ण-

दीनारपूर्णोऽयं वल्मीकः, तदेनं भुजङ्गं हत्वा सर्वमेकवारं किं न ग्रहीष्यामि' इति तस्य हृदि लोभः उदभवत्।

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम्।
तृषार्तो दुःखमाप्नोति परत्रेह च मानवः॥

ततोऽन्येद्युः लुब्धेन तेन ब्राह्मणकुमारेण दुग्धदानसमये स सर्पः लगुडेन शिरसि ताडितः। स च दैववशाद् अमुक्त-जीवितो रोषात्तं ब्राह्मणकुमारं तीव्रविषैः दशनैः तथाऽदशत् यथा स सद्यः पञ्चत्वमगच्छत्।

अथ पुनरपि स ब्राह्मणः प्रत्युषे क्षीरं गृहीत्वा वल्मीकमुपेत्य तारस्वरेण सर्पमस्तौत्। तदा सर्पो वल्मीकान्तर्लीन एव ब्राह्मणं प्रत्युवाच—हे ब्राह्मण! त्वं लोभाविष्टः पुत्रशोकमपि विहाय अत्रागतः। लुब्धो जनः कस्यापि मित्रं न भवतीति मन्ये—

लोभः सदा विचिन्त्यो लुब्धेभ्यः सर्वतो भयं दृष्टम्।
कार्याकार्यविचारो लोभविमूढस्य नास्त्येव॥

तदितःपरं तव मम च प्रीतिः नोचिता। सुवर्णदीनारलुब्धेन तव पुत्रेणाहं ताडितः, मया च स दष्टः। कथं मया तस्य लगुड-प्रहारो विस्मर्तव्यः? त्वयापि च कथं पुत्रशोकदुःखं विस्मर्तव्यम्? इत्युक्त्वा स बहुमूल्यं हीरकमणिमेकं तस्मै ब्राह्मणाय दत्वा—'पुन-स्त्वया नात्रागन्तव्यम्' इत्युपदिश्य च विवरमविशत्। ब्राह्मणोऽपि मणिं गृहीत्वा पुत्रबुद्धिं निन्दन् स्वगृहमगच्छद् अपठच्च श्लोकमिमम्—

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च।
द्वेषक्रोधादिजनको लोभः पापस्य कारणम्॥

---